

# प्रस्तावना.

अयि भारतवासिनः ! मम प्रियबान्धवाः ! इदं खलु तत्रभवतो निखिलभूमण्डलविख्यातस्य, परद्रव्यपरकान्तानिस्पृहस्य, सनातनधर्मरक्षणबद्धकंकणस्य, स्वमातृभूमिस्वातंत्र्यपालनाध्वरदीक्षितस्य दुर्मदोन्मत्तयवनोद्वेजितानां गवां तथाऽऽर्यसुन्दरीणां शरणस्य, यवनराज्यधूमकेतोः, अपारशौर्याकरस्य, छत्रपतिपदवीभूषणस्य, महाराष्ट्रमहीसौभाग्यतिलकस्य, भोसलेकुलसुधांशोः, श्रीशिवराजस्य पावनं व्यवहारादर्शभूतं चरितामृतं भवतां देशबांधवानां पावित्रेषु हस्तकमलेषु निदधतो मे मानसं कामप्येकामानन्दस्य परां काष्ठां भजते. धन्यः स कालो यत्र महाराष्ट्रस्वातंत्र्यरक्षणार्थं साक्षाच्छंकर एव शिवराजरूपेणावततार. महाभागाः ? अथ सत्याः सकललोकमान्याया मातुर्जिजादेव्या जनित्वा परमनिस्पृहाणां श्रीरामदासस्वामिनामनुग्रहपात्रमभूत्. दुःसहेन यवनाग्निना निर्दग्धकल्पानि महाराष्ट्रस्थानि क्षत्रियकुलकमलानि स्वप्रतापेन प्राकाशयत्. येन परमबलाढ्योऽपि विजापुराधीशो लीलयैव पराजितः, कपटी दिल्लीश्वरः स्वबुद्धिवैभवेन विस्मापितः, सर्वानपि बलाढ्यानाक्रान्तसमग्रभारतवर्षान् यवनाधीशा-

न्विजित्य महाराष्ट्रभूः स्वातंत्र्यसौभाग्यालंकृता कृता, तस्य जनकस्यैव महात्मनः शिवराजस्य प्रतापम् वर्णयितुं कथं मादृशो मानवः शक्नुयात् ? तथापि शिवराजस्य लोकोत्तरं चातुर्यं तथा मातृभक्तिं तथा दीनदयालुतां निरीक्ष्य विस्मितस्तदीयं चरितं वर्णयितुं संकल्पमकरवम्. संप्रति प्रायः सर्वेषामेव भारतवासिनां संकल्पा उत्पद्यन्ते विलीयन्ते नतु सफला भवति तथापि भगवता मदीयः संकल्पः सफलीकृत इति तं त्रैलोक्यनाथं नमस्कारैः संभाव्य गुणदोषविवेकचतुरान् पाठकान् गुणग्रहणाय विज्ञप्य विरमामि.

विदुषांवशंवदः

श्रीपादशास्त्री.



# मुख्यविषयानुक्रमः







# १ पूर्वप्रसंगः

१ महाराष्ट्रदेशपरिचयः

२ यवनानां दक्षिणापथे प्रवेशः

३ बहामनीराज्यं तदीया विभागाः

४ यवनानामधिशासने कृत्स्नस्य भारतस्य स्थितिः

( १ )

अस्ति समस्ते भारतवर्षे विख्यातः, सर्वतः परमविस्तीर्णैः परमप्रचण्डपाषाणावलिसंकटितैरतिविशालघनवृक्षराजिसमाच्छादितैः क्रूरव्याघ्रादिपशुनिवासीभूतैः सह्याचलस्य पादैर्व्यापृतः, स्थाने स्थाने विराजमानैः स्वातंत्र्यनिधिरक्षकैरिव परकीययवनादिरिपुगणास्पृष्टैः सफलसाधनसम्पन्नैर्नगरैरिव दुर्गैर्मनोहरः, चतुरकृषीवलसंस्कृतैर्नानाधान्यांकुरभूषितैः क्वचिद्धरितैः क्वचिद्रक्तैः क्वचित्पीतैः स्थलविभागैरतिसुन्दरः, स्वपावित्र्यनाशभिया यवनाक्रान्तादार्यावर्तात्समागतैरिव

विख्यातपावित्र्यैर्नानातीर्थस्थलैः पावितः, भागीरथीभगिन्येव वा हिमाचलकन्ययेव सह्याचलमागतया भागीरथ्येव वा परमपवित्रसलिलया उभयकूलविराजमानधान्यांकुरमण्डितक्षेत्रजातप्रतिबिंबविचित्रया कृष्णानद्या समलंकृतः, प्रतिपदविराजमानैरितिहासप्रसिद्धैः स्थलैः प्राप्तगौरवो महाराष्ट्रनामा महान् देशो दक्षिणापथे.

यश्च सकलेष्वपि भारतप्रदेशेषु यवनाक्रान्तेषु, सर्वेषु च भारतवासिषु दुर्मदयवनपीडितेषु, भगवत्या अनाथायाः कामधेन्व इव स्वातंत्र्यदेव्याश्चिरं निर्भयनिवासस्थानतां प्राप.

यं च—सर्वधर्मोपकारक ऐहिकामुष्मिकसुखदायी सर्वत्र सर्वैर्गौ संमानितः सनातनधर्मः प्रबलैर्यवनैराक्रान्तः स्वरक्षणार्थं सर्व गत्वाऽकृतार्थः शरणीकृत्याऽऽत्मानं ररक्ष.

येन च—समाक्रान्तसकलभारतवर्षा पवित्रभारतमहिलापातिव्रत हारिणी देवालयध्वंसकारिणी सात्त्विकविप्रगणत्रासदायिनी यवनवात बलात्कारेच्छा दक्षिणापथसार्वभौमस्येव नातिचक्राम.

यस्मैच —रोचते स्वकुलपावित्र्यं, स्वातंत्र्यं, सदाचारः, दीर्घोद्योगित्वं, कुशाग्रबुद्धित्वं, क्षमासमुद्धरणा, निरतिशयं शौर्यं च.

यस्माच्च—तानाजिमालुसरे, बाजीप्रभुदेशपांडे, प्रभृतयोऽपारशौर्याः, जोत्याजीकेसरकर, हिरोजीफर्जंद, संभाजीविलाळ, प्रमुखाः स्वा

भक्ता मातृभूमेर्निष्कासमेवकाः समुत्पन्ना इदं जगत् स्वर्गादपि श्रेष्ठमकार्षुः

यस्य च–कीर्तिं प्रतिपदं विराजमानानि श्रीशिवराजस्य तथा तदीयानां नररत्नानां पराक्रमैः परिभूषितानि नानास्थलानि समग्रे भूमण्डले विस्तृतां पुनरपि विस्तारयन्ति.

यस्मिंश्च परमशूरपुरुषजन्मदायिभ्यो महाकुलेभ्यः संभूतै राजनीतिचतुरैः पार्थिवरत्नैः शासितानि, स्वतंत्राणि, सर्वाधिकारसम्पन्नानि, कोल्हापुर,सांगली,मिरज,जमखिंडी,मुधोळ,प्रभृतीनि राज्यानि प्राचीनमहाराष्ट्रवैभवं सर्वान् स्मारयितुमिव भगवता रक्षितानि विराजन्ते.

( २ )

तस्मिन्नस्मिन् सकलसौख्याकरे समशीतोष्णे महाराष्ट्रदेशे आर्याणामागमनात्पूर्वं अनार्यशब्दवाच्या भिन्ना मानवजातयो न्यवसन. ता अपि यदोत्तरध्रुवनिवासिन आर्या आर्यावर्तमाक्रम्य तास्ततो निर्वासयामासुस्तदैवागत्याऽत्र निवासार्थमागच्छन. तत तदागमनात्पूर्वं कृत्स्नोऽपि महाराष्ट्रदेशो रिक्तएवासीत्. अनार्यास्तु स्वनिवासादार्यावर्तान्निर्वासिता इमं देशं प्राप्य प्रबलानि राज्यानि विरचयामासुः.

अथ यदाऽऽर्या भारतवर्षं प्रविश्य कृत्स्नमपि आर्यावर्तं स्वायत्तीकृत्य तत्र सर्वं व्यवस्थाप्य स्वास्थ्यमलभन्त, तदा ते दक्षिणापथे

विराजमानानि महाराष्ट्रदेशवर्तीनि अनार्यराज्यानि जेतुं मतिमकुर्वन्. महता साहसेन नर्मदां समुल्लंघ्य विंध्याचलमध्यगामिना मार्गेण महाराष्ट्रं प्रविश्य क्रमेण तत्रत्यानि राज्यानि स्वायत्तानि कुर्वाणास्ते आर्याः सकलमपि दक्षिणापथमाक्रम्यानार्यान् दासांश्चक्रुः. तेऽपि कालप्राप्तां दुर्दशां स्वीकृत्य तेषां दास्यं च प्रायो दक्षिणापथ एव स्थित्वा स्वजीवनमयापयन्.

एवं समग्रस्य भारतवर्षस्य स्वामित्वं लब्ध्वा ते आर्याः स्वराज्यव्यवस्थां कुर्वाणाः प्रथमतः स्वकर्माणि चतुर्धा व्यभजन्त. तानि च शिक्षणशासनवाणिज्यसेवाभेदेन भिन्नानि सकललोकशास्त्रप्रसिद्धान्येव. तदर्थे च ते स्वीयेभ्य एव कांश्चित्तैलप्रज्ञान् जनान् विशिष्य शिक्षार्थे न्ययुंजत. एवमेव तत्तत्कर्मयोग्यानन्यानपि. तेऽपि यथारुचि कर्म लब्ध्वा महता मोदेन तथोत्साहेन स्वकर्मणस्तादृशमुत्कर्षं चक्रुर्यथा सर्वेऽपि जगतीतलवासिनस्तदानींतनाः पुरुषाः परं व्यस्मयन्त. अद्यापि हि प्राचीना इतिहासविदस्तं विभज्यकर्मकारिणामार्याणामुत्कर्षं प्रतिपादयन्ति. विचारशीलास्तामेव समाजव्यवस्थां कामयन्ते.

एवंक्रमेण लौकिकसुखस्य परां काष्ठामारूढेषु सकलेष्वपि आर्येषु ते व्यवहारार्थं तथा कार्यस्य सौकर्यार्थं च कल्पिताश्चत्वारो विभागाः सकलोत्कर्षैककारणं परस्परैक्यं विस्मृत्य प्रत्येकं भिन्नानमन्यन्त. यथा हि प्रथमं ब्राह्मणाः क्षत्रियादीनवमन्वाना वर्णान् कयाऽपि विपत्त्या पीडितानवलोक्य तत्साहाय्यं शीघ्रमकार्षुस्तथा तदीया वंशजा

नाकुर्वन्. स्वीयं कर्म शिक्षणं तथा दानप्रतिग्रहादिकमेव मन्यमाना इतरेषु त्रिषु संपन्नेषु विपन्नेषु वौदासीन्येनावर्तन्त. इमां च वृत्तिं क्रमेणाग्रिमाअपि वर्णाः स्वीचक्रुः. तेन कृत्स्नोऽपि समाजः शिथिलावयवः शकट इव स्वकर्मणि अशक्तोऽभूत्.

किंच—रजोगुणप्रधाना क्षत्रियजातिः सर्वत्र स्वास्थ्यं लब्ध्वा जेतव्याभावात् सालसा विलाससक्ता बभूव. केचन परस्परं कलहायमानाः स्वकीयानामेव राज्यान्याक्रम्य स्वकीयानेव जघ्नुः. तेन क्षत्रियेष्वेव परस्परं द्वेषो बद्धमूलोऽभवत्. बान्धवाः! इमे यवनादयः परकीया बहोः कालादत्र व्यवहारमिषेण समागच्छन्, परन्तु आर्याणां दुर्धर्षेण तेजसा प्रतिहतास्तूष्णीमतिष्ठन्. यदा तु ते क्रमेण शिथिलीभूतं परस्परैक्यं सर्वोत्कर्षकारणमार्याणामपश्यंस्तदारभ्य मृत्युलोकवासिनीं कामधेनुमिवेमां भारतभुवं जेतुं प्रायतन्त. भारतवर्षादुत्तरेण क्रमेण प्रबलीभवन्तो यवना भारतवासिनां चतुर्णामपि वर्णानां परस्परवैमत्यं सर्वनाशकारणं सम्यगवगम्य भारतं जेतुं कृतनिश्चयास्ते प्रथमतः सिंधुनदमवतीर्य तत्रस्थं दाहीरनामानं क्षत्रियराजं पराजयन्त. समरशायिनस्तस्य कन्याश्च दासीर्व्यधुः. सर्वान् देवालयान् भूमिसाच्चक्रुः. ब्राह्मणांश्च बलादेव महंमदीयान. एवं विजयं लब्ध्वा प्राप्तविश्वासास्ते यवनाः क्रमेणाग्रे स्वपादान् प्रासारयन्. इमां नूतनां विपदं परिहर्तुं केचन तदानींतनाः क्षत्रियभूपालाः प्रायतन्त, परन्तु तादृशैक्याभावाद्वा प्राथमिकतेजोनाशाद्वा न ते यशस्विनोऽभवन्. प्रत्युत सबक्तगीन महंमदगिझनीप्रभृतिभिर्यवनाधिपैर्भूयोभूयः समाक्रम्य लुण्ठित-

सर्वस्वेयं भारतभूः कपर्दिकावशेषाऽपि नाभवत्. अगणितान् जनान्नि-हत्य तदीयै रक्तैश्च सिक्ता न नयनयोः संतोषमकरोत्.

वाचकाः ! जीवत्सु बलाढ्येषु तेषु क्षत्रियराजेषु अकस्मादनाथ-स्येव भारतस्य लुण्ठनं यवनैः कृतमिति विचित्रं विस्मयकरमिवाभाति, तथापि ये खलु विचारशीला न ते विस्मयन्ते ! बलाढ्योऽपि महानपि तूलसंघः सूक्ष्मेणाऽपि दृढेन वातेन विधूयते न वा ! स्थाने स्थाने विदीर्णो नानाछिद्रान्वितो महानपि पर्वतः स्वल्पेनाऽपि निर्झरणान्तः प्रविश्य चूर्णीक्रियते न वा ? तथैव बलाढ्याअपि क्षत्रिया अन्यैरु-दासीनैः कचिच्च वद्धद्वेषैर्भारतवासिभिरकृतसहायाः संहतैर्यवनैः पराजिताः. न केवलं क्षत्रियाणामेवेषा दुर्गतिः किंतु सर्वेषामपि त्रैवर्णि-कानां. बान्धवाः ? न खलु केवलमन्ये त्रैवर्णिका एव क्षत्रियानद्विषन् नासाहाय्ययन् किंतु क्षत्रियभूपाला अपि परस्परं बध्दद्वेषाः स्ववैर-निर्यातनार्थं यवनान् स्वसाहाय्यार्थमाव्हयन्. एवंस्थिते परस्परद्वेष-भिन्नानां क्षत्रियाणां विजयः कथं स्यात् ? सज्जनाः ? यवनानां समये भारतवासिनः क्षत्रियभूपालाः कथं परस्परमद्विषन्निति दर्शयितुमहं कांश्चिद्वृत्तान्तानितिहासप्रमाणान् लिखामि.

यदा चायं महंमदघोरीनामा यवनराजो भारतमाचक्राम तदा दिल्लीनगरे क्षत्रियकुलावतंसः पृथ्वीराजो राज्यमकरोत्. तस्मिन्नेव समये गुर्जरदेशे भोळाभीमदेवनाम्नाऽन्यः क्षत्रियश्रेष्ठ एव स्वराज्यं न्यायेन प्रशशास. स चाबूदुर्गे राज्यकारिणः परमारराजस्य इच्छिनीकुमारीं नाम कन्यां बलादेवायाचत. अबूनरपतिस्तु तां याचनां तिरस्कृत्य

योद्धुकामः स्वसाहाय्यार्थं पृथ्वीराजमाह्वयत्. पृथ्वीराजोऽपि गुर्जरपतिना समं बद्धवैरः 'अयमेव समयो वैरनिर्यातनस्य' इति मन्यमानस्तस्य साहाय्याय स्वयमागच्छत्. संवृत्ते च संग्रामे गुर्जराधिपं पराजित्य परमारकुमारीं परिणीय पृथ्वीराजः स्वराजधानीमाजगाम.

एवमेवैकदा कनोजाधिपतिना राजसूययज्ञः प्रारब्धः. तत्रामंत्रितोऽपि पृथ्वीराजो न जगाम. तस्य च कनोजाधिपस्य कन्या संयोगिता पृथ्वीराजं मनसा वव्रे. राजसूययज्ञनाशेन तथाऽन्यैश्च कारणैः पृथ्वीराजेन समं बद्धवैरः कनोजाधिपतिर्न तामभिननन्द किंतु कारागारे स्थापयामास. पृथ्वीराजश्च तां युक्त्या कारागारान्मोचयित्वा निभृतं परिणीय तया सह स्वराजधानीमाययौ. कनोजाधिपश्च तद्वृत्तमाकर्ण्य क्रुद्धः पृथ्वीराजमाक्रम्यायुध्यत परन्तु न लेभे यशः. तथापि कालसर्प इव तं द्विषन् यदा महंमदघोरीनामानं यवनाधिपं पृथ्वीराजाक्रमणाय समागच्छन्तं शुश्राव तदा तस्य सहायो भूत्वा पृथ्वीराजं नामशेषमकरोत्. स तु यवनाधिपः शीघ्रमेव तस्मै यमलोकप्रेषणरूपं पारितोषिकं विततार. वाचकाः! कतिप्रसंगानेवंविधान् दर्शयामि. सर्वथा भारतस्य पारतंत्र्ये तन्निवासिनां परस्परद्वेष एव कारणमिति तु निर्विवादम्. अस्तु. एवंक्रमेण कृत्स्नमपि आर्यावर्तं जित्वा ते यवनाः स्वराजधानीं दिल्लीनगरं विधाय सर्वान् देशविभागान् स्वाधीनानकुर्वन्.

अथ क्रमेण महंमदीयाः स्वस्वनिवासस्थानेभ्यः समागताः स्वकीयानेव दुर्बलान्नृपान्निहत्य स्वयमेव राज्याधिपा अभवन्. वाचकाः!

यदा हि यवनानामितिहासं वाचकः पठति तदा रात्रिंदिवं परद्रव्यस्य तथा परजायायाश्चापहारार्थं ते कीदृशानि कर्माणि चक्रुरिति चिन्ते कुर्वाणः स विस्मयसागरे निमज्जति. गुलाम,खिलजी,तघलख,मोंगलाभिधाना यवनवंशा बलोन्मत्ताः पूर्वं दुर्बलमघ्नन्. यदा च खिलजीकुलसंभवो जलालुद्दीननामा यवनाधिपो दिल्लीश्वरोऽभवत्तदा तस्य भ्रातुष्पुत्रोऽल्लाउद्दीनो योध्दुकाम आर्यावर्ते जेतव्याभावं पश्यन् दक्षिणापथे आर्यावर्तसमागतैः क्षत्रियैः स्थापितानि राज्यानि जेतुमाचकांक्ष. स तु महत्या त्वरया गुर्जरदेशं प्रविश्य तदधिपं कर्णरायं विजित्य तद्भार्यामात्मपत्नीं व्यधत्त. ततो देवगिरिं गत्वा तदधिपं रामरायं विजित्य स्वसामन्तमकरोत्. महाभागाः! अयमेव पराक्रमी अल्लाउद्दीन इत्थं दाक्षिणापथविजययशो लब्ध्वा निवृत्तः स्वपितृव्यस्य दर्शनायागच्छत्. तत्र च महता प्रेम्णा सत्कृत्य कुशलमापृच्छन्तं तमेव पितृव्यं पूर्वं संकेतितैः शस्त्रोपजीविभिर्निहत्य स्वयं दिल्लीश्वरोऽभवत्. वाचकाः! पश्यत राज्यलालसायाः स्वरूपं. यो हि जलालुद्दीनः स्वभ्रातुष्पुत्रं विजयिनं सत्कर्तुमागतः स एव तेन निहतः! अस्तु. अयमेव दक्षिणापथविजयी प्रथमो यवन इति वाचकैरवधारणीयं.

यदा चायं प्रबलो यवनो दक्षिणापथं जेतुं समागच्छत्तदा दाक्षिणापथे यानि समीचीनानि राज्यानि व्यराजन्, तानि केवलमैतिहासिकवृत्तज्ञानार्थमिह संक्षेपेण लिखामि. तदानीं महाराष्ट्रे यादवकुलसंभूता देवगिरिराजधानीका राजानो राज्यमकुर्वन्. तैलंगदेशे वरंगुळराजधान्यां नरपतिनामानो नृपा आसन्. द्राविडदेशे मदुराराजधानीकाः

पाण्ड्यकुलसंभवा भूपाला भुवमपालयन्. तत्रैव कांचीवरंराजधानीकाः चोलान्वयभवा राजानो व्यराजन्. अन्ये च स्थाने स्थाने पराक्रमशालिनो भूपाला यथाशक्ति दक्षिणापथमहीमपालयन्, परन्तु उपरिनिवेदितो यवनो यदा दक्षिणापथं अनुसाययौ तदा गजेन गजेन भग्ना इक्षव इवेमे सर्वेऽपि राजानः क्षणादेवानश्यन्. अथायमल्लाउद्दीनः क्रमेण रामेश्वरपर्यन्तं कृत्स्नं दक्षिणापथं निर्जित्य रामेश्वरक्षेत्रे एकं स्वधर्मस्योपासनामन्दिरं विधायापारधनराशिभिः समं स्वराजधानीमाजगाम.

( ३ )

एवं क्रमेण कृत्स्नं दक्षिणापथं निर्जित्य दिवंगतेऽल्लाउद्दीने तदीया वंशजाः कतिपये दिल्लीश्वरा अभवन्. ततश्च चरमं खिल्जीवंशसंभूतं दिल्लीश्वरं निहत्य महंमदतघलखनामा यवनो यदा दिल्लीश्वरो बभूव तदा दिल्लीनगरे गंगुनामा कश्चन विप्रवरो न्यवसत्. तस्य संनिधौ हसननामा यवनदास आसीत्. एकदा स हलेन क्षेत्रं कर्षन भूमौ सुवर्णपरिपूर्णमेकं भाण्डं लेभे. तच्च भाण्डं स्वस्वामिने सर्वं वृत्तं निवेद्य समर्पयत्. स च तत्स्वामी तस्य प्रामाणिकतामवलोक्य सन्तुष्टस्तं दास्यान्मोचयित्वा दिल्लीश्वरस्य सेवायां न्ययोजयत्. वाचकाः ? अयमेव प्रसिद्धस्य बहामनीसंज्ञकस्य दक्षिणापथीययवनराज्यस्य प्रथमः संस्थापकः. अस्तु. अचिरमेवायं हसनो दिल्लीश्वरस्य कृपां संपाद्य दक्षिणापथे तेन नियुक्तः सम्यक् राज्यकार्यमक-

रोत्. अचिरादेव गुर्जरप्रान्ताध्यक्षो राजद्रोही नाम भूत्वा स्वतंत्रो भवितुमियेष. तं च दक्षिणापथनियुक्तो राजप्रतिनिधिरसाहाय्ययत्. तं तु गुर्जरप्रान्ताध्यक्षं शासितुं स्वयं दिल्लीश्वरो महता सैन्येन समं गुर्जरदेशमागत्य लब्धयशास्तस्य साहाय्ययितारं दक्षिणापथाधिकारिणं शासितुं महाराष्ट्रमाययौ. अत्रान्तरे दिल्लीप्रान्ते किंचित्संकटमुद्भूत. तस्य निवारणार्थं तं प्रदेशं जिगमिषुः स स्वद्रोहिणो दक्षिणापथस्यैकस्य शासनकर्मणि एवं हसननामानं यवनं नियुज्य 'जाफरखान' पदव्या समलंचकार. ततश्च स्वदेशं गते दिल्लीश्वरे शत्रूनिर्मूलयित्वाऽऽत्मानं च 'अल्लाउद्दीनहसन' नाम्ना विख्यापयन् कृत्स्नस्य दक्षिणापथस्य स्वामिनं व्यधात्. क्रमेण तैलंगणगोंडवनादिविभागाध्यक्षैः समं युद्धानि विधाय सकलमत्र दक्षिणापथमनुशशास.

वाचकाः! एवंविधया संस्थापितेऽस्मिन् बहामनीराज्ये बहवो यवनराजा अभवन्. यदा चास्मिन् महति राज्ये ये खलु शासनार्थं राज्ञा नियुक्तास्तत्तद्विभागाध्यक्षास्त एव राजानं व्यसनासक्तं वीक्ष्य निर्भया अभवंस्तदा कृत्स्नमिदं राज्यमनश्यत्. नष्टस्यास्य महाराज्यस्य पंच विभागा अभवन्. ते च नामतो यथा—

विजापुरस्थः—आदिलशाहीनामकः
गोवळकोंडेस्थः—कुतुबशाहीनामकः
वऱ्हाडस्थः—इमादशाहीनामकः
अहमदनगरस्थः—निजामशाहीनामकः
अहमदाबादस्थः—बेरीदशाहीनामकः

तत्रान्तिमावस्रयो विभागा दिल्लीश्वरैर्युवा स्वराज्यान्तर्गताः कृताः. प्राथमिकौ द्वौ तु यदाऽस्मच्चरित्रनायकोऽवततार तदा सम्यगास्ताम्. वाचकाः! एतावत्कालं योऽयं मया यवनानामितिहासो लिखितस्तस्येदमेव प्रयोजनं यदस्मिंश्चरित्रनायकस्य वृत्तं सम्यक् ज्ञातं यथा भवेत्.

[ ४ ]

यदाप्रभृति कृत्स्नमिदं भारतवर्षं यवनैराक्रान्तं तदारभ्येदं मदमत्तगजेन विध्वस्तलताविशेषमुपवनमिव दुर्दशमभूदिति सर्वेषामितिहासविदां मतम्. प्रायः सर्वे एव यवनराजा यं भारतप्रदेशमजयंस्तत्रत्यान् ब्राह्मणांस्त बलात्कारेण यवनानकार्षुः. आर्याणां सुन्दराणि देवालयानि ध्वंसयामासुः. याश्च ब्राह्मणानां वेतरेषां वा परिणीता वाऽपरिणीता वा कन्यकास्ता बलादवाहृत्य स्वभोग्या व्यधुः. तासां भर्तॄनथवा पितॄन् शूलावतंसांश्चक्रुः. सपरिश्रमं ब्राह्मणैर्लिखितान् ग्रंथानग्नौ चिक्षिपुः. आर्यदेवतानां मूर्तीः शकलीकृत्य तानि शकलानि स्वोपासनामंदिराणां सोपानेषु नियोजयामासुः. नतावदेव किंतु अगृहीतयवनधर्माणामार्याणामुपरि नूतनं करं स्थापयामासुः. तेन प्रायः सर्वत्रैवास्वास्थ्यमासीत्. वाचकाः! यद्यपि यदा बलवता केनचिद्दुर्बलं राष्ट्रं विजीयते तदा तत्रत्या प्रधानीभूता राजसत्ता नश्यति, तथापि तादृशराजसत्तास्थापकानि मूलकारणानि न नश्यन्ति. तस्माद्ये खलु मतिमन्तो जेतारस्ते जितं नूतनं राज्यं शनैःशनैर्युक्तिभिरात्मसा-

श्यतां नयन्ति न बलात्कारेण. बलात्कृताश्च जिता अपि जना दुर्मनायन्ते. प्रजाप्रसादमूलिका हि राजसत्तेति सर्वेषां मतं. एषैव राजनीतिः. सा तु यवनेषु अंशतोऽपि नासीत्. ते केवलं खड्गबलेनैव राज्यशासनमजानन्. तेन प्रतिवर्षं सहस्रशो राजद्रोहिणः प्रादुरभवन्. प्रजाजना अपि दुर्बलं स्वाधिपं वीक्ष्य तदीयत्रासादात्मानं मोचयितुं प्रायतन्त. ततो भारते स्वास्थ्यस्य नामापि नाश्रूयत.

किंच–यथा हि सकलो जनः स्वाभीष्टं धनादिकं मन्यते तथैव स्वकलत्रपुत्रादीन्. एवंस्थिते भारतं विजित्यात्रत्याः सुस्वरूपा महिला दासीः कर्तुं प्रयतमाना यवनाः सर्वानपि भारतवासिनोऽपारदुःखसागरमग्नानकार्षुः. न केवलं साधारणाः सैनिका यवना इत्थं चक्रुः, किंतु परस्त्रीापहारकर्मणि दिल्लीश्वरा अपि निपुणा एवासन्. परेषां जायापहरणार्थं ते महान्ति युद्धानि व्यधुः. प्रसिद्धो दिल्लीश्वरोऽल्लाउद्दीनः चितोडदुर्गाधिपस्य महाराजलक्ष्मणसिंहस्य पितृव्यपत्नीं पद्मिनीं लावण्यवतीं निशम्य तां कामयमानो घोरं युद्धं विधाय स्वकीयान् सैनिकांस्तथा परानपि अगणितान् समरदावानले जुहाव. अन्ते तामपि महाभाग्यां सतीं पद्मिनीं वन्हौ शलभायितां नालभतैव. सज्जनाः! सर्वस्मिन्नसारे संसारे सारं कौटुम्बिकं सुखं. तत्र च गृहिण्येव मुख्य कारणं. तस्या एवापहारे निराशो मनुष्यः किं किं न कुर्यात्!

अपिच–यथाहि संसारे मानवा लौकिकं सुखं कामयन्ते तथैव मानमपि. यदि ते मानं न कामयेरंस्तदा लौकिकं सुखं प्रभूतं

लब्ध्वाऽपि न ते पशुभ्योऽतिरिच्येरन्. लौकिकं हि सुखमाहारनिद्राभयमैथुनजन्यं पशवोऽपि लभन्त एव. धर्मपत्न्यपहारतो नापमानः कश्चनान्योऽधिको भवितुमर्हति. आर्याश्च यद्यपि यवनैर्जितास्तथापि संस्कृत्या ते ततो निःसंशयं श्रेष्ठा एव. तत इमां यवनानां पशुरीतिमवेक्ष्य संतप्ता एकीभूय तन्नाशार्थं प्रायतन्त.

अपरंच–मानवा लौकिकं सुखं कामयमाना यथा स्वकुटुंबरक्षणाय प्रयतन्ते तथैव स्वधर्मस्य. धर्मो नाम समाजसौख्याय प्राज्ञैर्विहिता नियमाः. आर्याणां च मूर्तिपूजा धर्मत्वेनाभिमता. तदर्थं च ते महताऽऽदरेण स्थाने स्थानेऽनेकानि अलौकिकशिल्पचातुर्यद्योतकानि देवालयानि व्यरचयन्. यवनास्तु तानि विनाश्य देवप्रतिमाभिश्च स्वोपासनामंदिराणां सोपानततिं निर्ममुः. वाचकाः ! यथा हि स्वकीयो धर्मः स्वस्य प्रियस्तथैव परकीयः परेषामिति न तेऽजानन्. तत्रापि संतप्ता आर्या यवनराज्यनाशमैच्छन्.

अन्यच्च–ये खलु विद्वांसो बुद्धिमन्तस्त एवाज्ञानां धौरेया भवन्तीति सार्वजनीनं. आर्याणां धौरेया ब्राह्मणा एवासन्. यवनाश्च तान् स्वधर्मत्यागाय वा मरणाय वा वदन्तोऽकोपयन्. तथा गवां घातेनाऽपि सर्वानुद्वेजयामासुः. तेन मानिनो बलिष्ठा स्वीकृतयवनसेवा अपि क्षत्रिया दुर्मनायमानाः स्वातंत्र्यलाभाय प्रायतन्त. एवं समुत्सुक-

षु क्षत्रियकुलेषु ब्राह्मणाअपि गृहीतभिन्नभिन्नवेषा उपासनोपदेशद्वारा सर्वेभ्यो भारतस्येमां दुरवस्थां निवेद्योत्तेजयामासुः. एवंरीत्या यवन-संतापितानां सर्वेषां भारतवासिनां स्वातंत्र्यलाभेच्छा कथं महाराष्ट्रे फलवत्यभूदिति वयं क्रमेण निरूपयिष्यामः.






१ यवनानां त्रासाद्दक्षिणपथमागताः क्षत्रियशाखाः

२ राजस्थानक्षत्रियवृत्तम्.

३ भोसलेकुलोत्पन्नानां प्रधानपुरुषाणां संक्षेपेण वृत्तम्.

४ पितामहस्य मालोजिराजस्य सविस्तरं वर्णनम्.

[ १ ]

वाचकाः ! निरूपितो मया यथामति पूर्वप्रसंगः. यद्यप्यद्य चरित्रनायकस्य वृत्तं निरूपयितुं योग्यं तथापि शिवनृपतेः कुलवृत्तज्ञानार्थमन्येषां दक्षिणापथवासिनां तत्सजातीयानां कुलवृत्तनिरूपणमावश्यकमिति तदेवादौ निरूपयामि.

यदाऽऽर्यावर्ते यवना बलिष्ठा भूयांसश्चाभवंस्तदा बहव आर्यवंशजा क्षत्रिया नूतनानि राज्यानि स्थापयितुं दक्षिणापथमागच्छन्निति मया पूर्वमेव कथितं. तथैव दक्षिणापथे तैः स्थापितानि राज्यानि पुनरपि मदोन्मत्ता यवना अजयन्नित्यपि. तत्र दक्षिणापथे स्थापितानां

भिन्नानां राज्यानां नाशे त एव क्षत्रियकुलसंभूताः श्रेष्ठा आर्या गत्यन्तराभावात् कथमपि तेषु तेषु यवनराज्येषु योगक्षेमार्थं कांश्चिद्-धिकारान् संपाद्य तानेव यवनानसेवन्त. भूयोभूयस्तैस्तैर्यवनराजैरपमानिताअपि तादृशोत्साहाभावाद्वा तादृशैक्यासत्वाद्वाऽनुकूलं समयमपश्यन्तः कथमपि संसारयात्रां यापयामासुः. अग्रे च तदीया वंशजाः क्रमेण भिन्नेषु यवनराज्येषु लब्धाधिकारास्तानेव स्वपालकान् मन्यमाना विस्मृतस्वस्वरूपा लुप्तसंस्कारा अनार्यैः कृतसंबंधाः शूद्रताम-भजन्त.

किंच—यवनत्रासाद्याः खलु दक्षिणापथं क्षत्रियशाखाः समागच्छंस्ताअपि यवनैर्जिताः कालप्रभावात् स्वास्तित्वमाशंकमानाः स्वशरीरसंबंधं पूर्वं प्रतिषिद्धैरनार्यैः समं चक्रुर्गत्यन्तराभावादेव. न खलु अनार्येभ्यो यवनान् समभिधानान् कोऽपि सचेता मनुते. एवं स्पष्टतरे वृत्ते जागरूके सत्यपि ते तदानींतनैर्विप्रवरैः पुनरपि संस्कृत्य क्षात्रियतां लंभयित्वा स्वकर्मानुष्ठातुं न प्रोत्साहिता इति महच्छोकास्पदं ? वाचकाः! शौर्यप्रधाना क्षात्रियजातिर्यस्मासु नास्तीति कथ्यते तदाऽस्मासु शौर्यमेव नास्तीति कथितं स्यात्. तथासति नपुंसकानां नः को वा जगति मानः ? वीरभोग्या वसुंधरा! प्रत्युत यदा शिवराजचन्द्रमाः समुल्ललास तदा बहवः खलु यवनधर्मानुसारिणस्त्यक्तसनातनधर्माणः स्वसजातीयाः पुनरपि संस्कारैः संस्कृत्य स्वधर्मानुसारिणः कृताः. यथा निंबाळकरोपनामा कश्चन क्षत्रियश्रेष्ठो विजापुराधीशस्य कन्यां परिणीय महंमदीयधर्मदीक्षि

जग्राह. शिवराजो यदा स्वराज्यस्थापनाव्यग्र आसीत्तदा तादृशस्य बलिनः प्रधानयवनराजसेवकस्य साहाय्यमपेक्षमाणा शिवराजमाता जिजादेवी शंभुदेवदेवालये यथाशास्त्रं संस्कारैस्तं पावयित्वा तस्य पुत्राय स्वपौत्रीमदात्. सज्जनाः! पश्यत जिजादेव्या दूरदर्शित्वम्? तत एव मध्यसमये बलिष्ठानपि यवनान् निर्जित्य स्वराज्यं स्थापयितुं शिवराजः प्राभवत्. एवं जाग्रति पुरावृत्ते शिवराजः शूद्र इति निःसंदिग्धं ब्रुवतो जनान् वीक्ष्य वयं परं दुःखाकुला भवामः! अस्तु. किंगतानुशोकेन. प्रकृतमनुसरामः. यद्यपि क्षत्रियशाखानां दक्षिणापथमागतानां साक्षाद्वंशेतिहासा नोपलभ्यन्ते तथापि ये खलु समुपलब्धा वृत्तान्तास्तेभ्य एव कथंचिद्वृत्तं संगृह्य लिखामि. ताश्च शाखाः संक्षेपेण यथा—शिर्के, घाटगे घोरपडे, मोहिते महाडिक-मोरे, सावंत, निंबाळकर जाधवेत्युपाख्या यवनराज्ये न्यूनाधिकांश्चाधिकारान् लब्ध्वा तानेवासेवन्त.

१ तत्र शिर्केवंशजाः प्रथमं कोंकणविभागे न्यवसन्. स च विभागः प्रकृत्यैव दुर्गमसह्याचलशिखरव्याप्तो यवनानां दुर्जयोऽभवत्. तत्र च स्थिता यथाशक्ति विजापुराधीशमनमन्तः स्वातंत्र्येणावर्तन्त. अथ यदा विजापुराधीशोऽन्यैरार्यजनैः समं मिलित्वा तानजयत्तदा तेऽस्मिन्नेव कोंकणविभागे विराजन्तं सुर्वेनामानं स्वतंत्रं स्वकीयं भूपालमाश्रयन्त. ततः शिवराजं स्वातंत्र्यार्थं प्रयतमानं निशम्य

प्रमुदितास्ते सर्वेऽपि स्वाभिमानशालिनस्तस्य साहाय्यार्थमागच्छन्. सोऽपि तान् शूरान् संगृह्य तत्रैकस्य कन्यां शिवराजः स्वस्नुषामकरोत्. स्वयमपि तद्वंशसंभूतां कन्यां पर्यणयत्. स्वकन्यामपि तत्कुलोत्पन्नाय गणाजिरावनाम्ने शूराय ददौ. एतेषामीदृशोपनामलाभे तन्निवासग्रामे 'शिरकाई' देव्या अस्तित्वमेव कारणं.

२ घाटगेवंशजा महाराष्ट्रमध्ये लब्धप्रतिष्ठा नूतनाभिः स्वप्रतापार्जिताभिः 'सर्जेराव झुंजारराव' प्रभृतिभिः सन्मानबोधिकाभिः पदवीभिः समलंकृताः नरपुंगवा आसन्.

३ घोरपडेवंशजाः 'सोंडूरकर, मुधोळकर, दत्तवाडकर, गुत्तीकर,' इत्यादिनामभेदेन भिन्ना बहव एव. तेषां च प्राथमिकं नाम भोंसले इत्येव. परन्तु कश्चन प्रतापी एतद्वंशजः पुरुषो यवनाधीशं सेवमानस्तदर्थं घोरपडीनाम्ना दुर्गारोहणयन्त्रेण किमपि दुर्गं समारुह्य जिगाय. तेन च तादृशं तस्य नाम बभूव. इमेऽपि शिवराजस्य सहाया एव.

४ मोहितेकुलसंभूताः पुरुषाः पराक्रमशालिनोऽभवन्. तत्र शिवराजस्य मुख्यः सेनापतिर्हंबीररावनामा मोहितेकुलसंभूत एव. तथा शिवराजस्य सापत्नमाताऽपि.

५ महाडिकवंशजाअपि नरवीराः परमशूराः प्रथमतः स्वतंत्रा एव, तथापि मोरेकुलसंभवैः पुरुषैर्जिताः श्रीशिवराजमाश्रित्य देशोद्धारं चक्रुः. एतत्कुलसंभूताय हरजीराजाय श्रीशिवराजः स्वकन्यामदात्.

६ मोरेवंशजाअपि पुरुषा अंशतः स्वतंत्राः सर्व कोंकण-विभागमपालयन्.

७ सावन्तान्वयसंभूता नरा विजापुराधीशानुग्रहेण परं वैभवं समपादयन्.

८ निंबाळकरकुलजाअपि पराक्रमशालिन आसन्. अद्यापि ते स्वराज्यं भुंजते. एते खलु परमारनामकसुप्रसिद्धक्षत्रियकुलसंभूता इति प्राचीनेतिहासविदो वदन्ति. एतदन्वयसंजाता जगपाळरावनामा क्षत्रियश्रेष्ठः स्वतंत्र एवासीत्. अस्मच्चरित्रनायकस्य पितामही जगपालरावस्य भगिनी. अस्मिन् वंशे संजाता मुधोजीरावस्य कन्या शिवराजस्य ज्येष्ठपत्नी.

९ इदं जाधवकुलं प्रसिद्धाद्यादवकुलात्संभूतं तच्छाखाभूतमेव. अस्मिन्नेव सुप्रसिद्धो देवगिरिनाथो रामदेवरावोऽभूत्- अतएव जाधव-शब्दोऽपि यादवशब्दस्यापभ्रंश एव. यदा च महंमदीयैर्दक्षिणापथो

जितस्तदा निभृतं ते खानदेशनामके दक्षिणापथविभाग एवातिष्ठन्. ततश्च क्रमेणेतरक्षत्रियवदिमेऽपि निजामशाहीराज्ये लब्धप्रतिष्ठा नाना- पराक्रमाकृत्यान्यकार्षुः. वाचकाः! संक्षेपतः केवलं स्वरूपप्रदर्शनार्थं मयेमाः शाखा निरूपिताः. अन्याअपि बह्व्यः शाखा देशभेदेन कालभेदेन च विपरीतकुलाभिधाना विपन्ना स्वीकृतनीचव्यवसायाः सर्वत्रैव महाराष्ट्रदेशे न्यवसन्निति सूक्ष्मदर्शिनामितिहासविदां मतं. ताश्च शिवराजसमये लब्धावसराः शौर्येण यवनांस्तिरश्चक्रुः.

(२)

वाचकाः! यथा काश्चन क्षत्रियशाखा दक्षिणापथमागता- स्तथैव काश्चन मेवाडनाम्नि भारतस्य मध्यप्रदेशेऽप्यवसन्. सोऽपि प्रदेशो विस्तीर्णपर्वतगणपरिवेष्टित एव. यथैव दक्षिणापथे सह्याचल- माश्रित्योपरिदर्शिताभिः क्षत्रियशाखाभिः स्वरक्षणं कृतं, तथैव राजस्थानवासिभिः क्षत्रियकुलैररवलीप्रभृतीन् पर्वतान्. दिल्लीश्वरादयो यवनराजाः समप्रदेशे आर्यान् जेतुं शक्ताअपि दुर्गमे दुर्गाकुले पर्वतसंकुलदेशे न ते आर्यान् जेतुमशकन्. तेन प्रायः सर्वेऽपि क्षत्रियवर्गा यवनत्रासभिया दुर्गमारण्यसंकुल एव स्थाने न्यवसन्. अस्तु. सम्प्रति राजस्थाने दृश्यमानानि सर्वाण्यपि क्षत्रियकुलानि सुप्रसिद्धयो रामायणमहाभारतगीतयोः सूर्यचन्द्रवंशयोरेव शाखा- भूतानि. एतदुभयकुलसंभूता बहवो वीराः स्थाने स्थाने नूतनानि राज्यानि स्थापयामासुः. अधुना च प्राधान्येन राजस्थाने चत्वारि

सूर्यवंशसंबद्धानि तथा द्वे चन्द्रवंशसंबद्धे क्षत्रियकुले विराजतः. तत्र राठोडवंशो जोधपुरे, कच्छवाहवंशो जयपुरे, गोहेलवंशो भावनगरे, तथा भाटीवंशो जैसलमीरे, जाडेजावंशो जामनगरे, विराजेते. मुख्यो गेहलोटवंशस्तु उदयपुरे सूर्यवत्प्रकाशमानः सम्प्रति भगवतीमनेकसतीवीरजननविख्यां सकलभारतेतिहासप्रसिद्धां राजस्थानभूमिं तिलकः सौभाग्यवतीमिव भूषयति. वाचकाः! नास्ति अत्र सर्वेषामेवापारिदर्शितानां वंशानां वर्णनस्यावश्यकता. ते हि मया विरचिते श्रीमहाराणाप्रतापसिंहचरिते सम्यग्वर्णिताः. अस्य चरित्रनायकस्य गेहलोटवंशजत्वेन तमेव केवलं वर्णयामि.

तत्रभवतो भगवतः कौसल्यानन्दनस्य श्रीरामचन्द्रस्य कुशलवौ नाम द्वौ पुत्रावास्ताम्. तत्र कनिष्ठो लवो लाहोरनगरं वासयामास. अवन्तिनाथे विक्रमादित्ये राजनि सति कनकसेनो नाम राजा सौराष्ट्रदेशमागत्योवास. ततआरभ्यायं वंशः सेननाम्ना व्यपादिश्यत. अयं च कनकसेनो यदा परमारराज्यमाक्रम्य तत्रैव न्यवसत्तदा तद्वंश्यैस्तत्र नाना नगराणि वासितानि. तेषु वलभीपुरं नाम नगरं मुख्यमासीत्. तत्र च कनकसेनवंश्यः शिलादित्यो नाम राजा प्रबलैर्यवनैः समं युध्यमानः सपरिवारं रणे निहतः. तदानीं तस्य भार्याऽबुपर्वते वर्तमानं भगवतीमन्दिरं गता तत्रैव सर्वं कुलक्षय-वृत्तमश्रृणोत्. दुःखाकुलाऽपि सा कठोरगर्भतया स्वर्गवासिनः पत्यु-

मार्गमनुसर्तुमक्षमा तत्रैव निभृतं वसन्ती सुलक्षणं पुत्रं सुषुवे. तं च पुत्रं विप्रसात्कृत्य स्वर्गं जगाम. स च बालको वर्धमानः शैलसंभूततया गुहइति जनैर्व्यपदिश्यमानो लब्धसाहाय्यो वनचरैः स्वाधिपत्वेन स्वीकृतो नूतनं राज्यं स्थापयामास. तस्य कुले पट् राजानः समभवन्. सप्तमे नागादित्ये राजनि केनापि निमित्तेन संघीभूय समुत्थिता वनेचरास्तं व्यापादयन्. तस्य पत्नी गर्भिणी बाप्पारावळनामानं पुत्रं प्रासूत. बाप्पारावळश्च नाम्ना विप्रेण पालितोऽपि यौवने चितोडाधिपस्य सेवको भूत्वा अद्भुतानि पराक्रम-कृत्यान्यकरोत्. अन्ते च बाप्पारावळाय स्वकीयं राज्यं समर्प्य चितोडाधिपः स्वदेहसाफल्यं विधातुं वनमगात्. तद्दिनमारभ्यायं वंशश्चितोडनगरे विराजमानोऽद्यापि वर्तते. एतत्कुलसंभूतः कश्चन राजा सेवकदोषेण पीतमद्य आत्मानं पापिनं मन्यमानस्तस्य पापस्य निवृत्तये सीसकरसं निपीय प्राणाञ्जहौ. ततएवास्य कुलस्य नाम 'शिसोदिया'इति संवृत्तमिति प्राचीनेतिहासविदो वदन्ति. अस्तु. तत्र स्वातंत्र्येण स्वराज्यं पालयतस्तद्वंशजान् समग्रभारतस्वामिनो दिल्लीश्वरा भूयोभूयोऽपीडयन्. तथापि ते दिल्लीश्वरं नानमन्. अथ लक्ष्मणसिंहे चितोडाधिपे सति अयं परदारसंसर्गलोलुपः प्रसिद्धो दिल्लीश्वरोऽल्लाउद्दीनस्तस्य पितृव्यपत्नीं महासाध्वीं लावण्यखनिमाकर्ण्य तां कामयमानः प्रायुध्यत. राज्ञा लक्ष्मणसिंहेन पराजितोऽपि साभि-निवेशं भूयोभूयः प्रावर्तत. लक्ष्मणसिंहश्च तस्याभिनिवेशं तथा

मशक्ता यवनास्तद्वंशजं देवराजमहाराजमेव जित्वा सामन्तं कर्तुं प्रायतन्त. यदा च देवराजमहाराजो यवनेभ्यो राज्यपालनमशक्यममंस्त तदा तदाधिपत्यस्वीकारेण स्ववंशं कलंकयितुमनिच्छन् राज्यं विहाय महाराष्ट्रमागतो भीमाकृष्णानद्योर्मध्ये स्वल्पं देशमाक्रम्य यथाकथंचित्कालं यापयामास. तमिमं देवराजमहाराजं यवना इत्थमद्विषन् यत् स स्वकीयं नाम परिवर्तयामास. स च महाराज आत्मानं भोंसावन्तनाम्ना संबोधितुमारेभे. अयमेव भोसावंत-शब्दोऽग्रेऽपभ्रंशरूपेण भोसलेपदेन जनैरुच्चारितस्तदेव स्वरूपं बभार. एष देवराजमहाराजः प्रकृत्यैव स्वातंत्र्यप्रियः स्वीयं नूतनं राज्यं महाराष्ट्रे स्थापयितुं प्रायतत. परन्तु सर्वतो महंमदीयानां त्रासान्न यशो लेभे.

अथ तदीया वंशजाअपि क्रमेण नानाग्रामाणामध्यक्षतां स्वीकृत्य कथमपि अजीवन्. अस्य वंशे 'इन्द्रसेन, शुभकृष्ण, रूपसिंह,-भूमीन्द्र, धापजी, बरबटजी, कर्णसिंह, संभाजि, शिवाजिनामानः पुरुषा अजायन्त. तत्र चरमः शिवाज्यपरपर्यायो बाबाजिः खलु अस्मच्चरित्रनायकस्य प्रपितामहः. अयं चातीव सदाचारी दीनवत्सलो महामना आसीत्. तस्य द्वौ पुत्रौ मालोजिविठोजिनामानौ.

( ४ )

वाचकाः ? अयं खलु मालोजिराजोऽस्मच्चरित्रनायकस्य पितामह इति यथासंभवं तदीयं चरितं सविस्तरं वर्णयामि. असौ मालो-

जिराजो जीवति पितरि देऊळगांवग्रामस्याध्यक्षतां स्वीकृत्य कथंचिदवसत्. परन्तु कृषिकर्मणा जीवनेऽसन्तुष्टः स स्वगृहं विहाय ततो निर्गतः सबन्धुः सिंधखेडाधिपस्य यादवकुलोत्पन्नस्य लक्ष्मणजाधवरावस्य सेनायां सैनिकोऽभवत्. अयं च लक्ष्मणजाधवरावो निजामशाहीराज्ये लब्धप्रतिष्ठो द्वादशसहस्रसादिनामधिप आसीत्. सोऽपि सानन्दममुं मालोजिराजं तथा तदीयं बन्धुं विठोजिं स्वसेनायां सादित्वेनास्थापयत्. अयं मालोजिराजो जगपाळरावनिंबाळकरस्य भगिनीं दीपादेवीं पर्यणयत्. एवं क्रमेण कियति काले गते सा मालोजिराजस्य पत्नी दीपादेवी पुत्रमलब्ध्वाऽऽत्मानं वंध्यां मन्यमाना प्रतिदिनमखिद्यत. अथ कतिपयमासैः सफलीभूतमनोरथा क्रमेण पुत्रद्वयं लेभे. तत्र च ज्येष्ठस्य नामधेयं शहाजिः, कनिष्ठस्य तु शरीफजिरिति. ज्येष्ठः शहाजिराजः सुस्वरूपश्चपलोऽतीव गुणी चतुरः सर्वेषां प्रिय आसीत्. स च लक्ष्मणजाधवरावस्य कन्यया पंचवर्षया जिजाबाइया समं बद्धसख्योऽक्रीडत्. एवं गच्छति काल एकदा रंगपंचमीमहोत्सवक्रीडार्थं सर्वानपि स्वकीयांस्तथा सेनाप्रमुखांश्च जाधवराव आव्हयति स्म. तत्रेतरवदाहूतो मालोजिराजोऽपि बालेन सुव्यवस्थितनेपथ्यशालिना पुत्रेण शहाजिराजेन सममुत्सवस्थानं ययौ. सर्वेषु मुख्येष्वधिकारिषु स्वस्वस्थानमलंकुर्वत्सु सत्सु जाधवरावोऽपि समागतः सर्वैर्जनैः कृतान् प्रणामान् स्वीकुर्वन् मुख्यं स्थानमलंचक्रे. स तु दूरं स्थितस्याऽपि मालोजिराजस्य पुत्रेण हृतमानसः सस्मितमुखकमलो

महता प्रेम्णा तं स्वसमीपे स्थातुमाव्हयत्. सोऽपि महाभागः शहाजि-राजो महता विनयेन तस्य समीपं गत्वोपविवेश. तं च स्वपितुः-समीपे स्थितं स्वबालमित्रमवलोक्य जिजादेवी सत्वरमागत्य पितुरं-कमारुरोह. तौ च समानवयस्कौ सुस्वरूपौ बालौ वीक्ष्य जाधवराव: सहासं लीलया जिजादेवीमपृच्छत्–वत्से ? वांच्छसि त्वमिमं पति-मिति. अनन्तरमेव तौ बालकौ भाविना शुभेन चोदितौ महाराष्ट्रस्य पुण्यसंचयेन प्रेरितौ वा परस्परगात्रयोः सुगंधि द्रव्यमक्षिपताम्. मीलिताः सदस्याअपि तयोरिमामनुरूपां क्रीडामवलोक्य विस्मिताः 'सर्वथा योग्याविमौ दम्पतीत्वे' इत्यवोचन्. तदानीमेव मालोजिराजः समुत्थाय जगाद–सभ्याः! जाधवरावाः खलु अद्यप्रभृति नः संबं-धिनः संवृत्ताः. तेषां वाक्यं भवद्भिः श्रुतमेव. महान्तः सकृदुच्चरितं शद्बमन्यथा न परिवर्तयन्ति इति. सकलाः सभ्याअपि सत्यमेवेदमिति बभाषिरे. ततश्च द्वितीये दिने भोजनार्थमाहूतोऽपि मालोजिराजः विवाहसमय एव युष्माभिः सह भोजनं भविष्यतीति दूतद्वारा निवेद्य भोजनार्थं नाजगाम.

तदिदं वृत्तं जाधवरावस्य पत्नी म्हाळसादेवी श्रुत्वा नितान्तम-कुप्यत्. सा तथा स्वपतिमस्मिन्विषयेऽदूषयद्येन जाधवरावः 'केवलं सभायामहं तथा विनोदेनावदम्. न तथाऽस्ति ममाशयः' इत्युक्त्वा तां सान्त्वयामास. न्यवेदयच्च तथैव मालोजिराजाय. तथापि मालो-

जिराजं बद्धाग्रहं वीक्ष्य क्रुद्धः स जाधवरावस्तं सबन्धुं स्वसेवातो निरवासयत्.

अनया रीत्या मालोजिराजः सर्वां प्रतिष्ठां गमयित्वा पुनरपि कृषीवलः संवृत्तः. वाचकाः ! पश्यत धनस्य माहात्म्यं. मानिन उच्चकुलोत्पन्नस्यापि शूरस्य मालोजिराजस्य धनाभावेनेयानपमानः ! एतेनात्र संसारे हि धनमेव सकलप्रतिष्ठाकारणमिति निर्णीतमेव. यद्यपि केचन विद्यया लब्धसन्माना दृश्यन्ते तथापि अपवादा एव ते. अतो येन केनाऽपि विद्याभिलाषिणा धनमूलको मानो ह्ययमेव. यो हि धनमूलकं मानमभ्यर्थयेत तेन सर्वथा धनसंपादन एव प्रयत्नः करणीय इति तत्त्वम्. अस्तु. एवं मानधनः स मालोजिराजो जाधवरावादपमानं लब्ध्वा दुःखाकुलो धनाभावमूलकोऽयमपमान इति दृढं निश्चित्य धनसंपादनार्थे प्रायतत.

एकदा पूर्णचन्द्रचन्द्रिकाधवलितसकलमहीमण्डले पूर्णिमादिने मालोजिराजः समं स्वबन्धुना क्षेत्रं पालयन्नवस्थितो मध्यरात्रे पुरस्ताद्वर्तमानाद्वल्मीकान्निर्गतं सुवर्णरत्नकंकणमण्डितं करमवलोक्य विस्मितस्तद्वृत्तं स्वबन्धवे न्यवेदयत्. स तु तं सर्वं केवलं भासं वदंस्तूष्णीमतिष्ठत्. ततश्च सुप्ते मालोजिराजे स्वप्ने साक्षाज्जगदंबा शुभ्रवस्त्रपरिधाना स्मेरमुखी तं स्पष्टमवदत्–वत्स ! चिन्तां

मा कुरु. अहं हि प्रसन्नाऽस्मि. अस्मिन् वल्मीके सर्पो विद्यते तं नमस्कृत्य वल्मीकं खन. स तु भुजंगोऽन्यत्र गमिष्यति. तस्मिन् वल्मीके त्वं प्रभूतं धनं लप्स्यसे. त्वदीया वंशजाः सप्तविंशतिसंख्याकाः स्वतंत्रा राजानो भविष्यन्ति इति. तमिमं स्वप्नं वीक्ष्य जाग्रत् मालोजिराजः स्वबन्धवे सर्वं कथयित्वा तद्वल्मीकमखनत्. खाते च तस्मिन् भगवत्याज्ञानुरूपं बहु धनं लेभे. अथ जगदंबावरप्रसादलब्धं धनं प्राप्यात्यन्तमुत्साहितो मालोजिराजः स्वधनव्ययेन सहस्रमश्वारोहाणामस्थापयत्. तथा स्थाने स्थाने देवालयान् सरांसि च निर्माय ब्राह्मणान् भोजयन् स्वकुलं शकस्य कर्ता भविष्यतीति विख्यापयामास.

एवमुत्कर्षं लब्ध्वा पुनर्विज्ञापितोऽपि जाधवरावो यदा स्वकन्यां दातुं नैच्छत्तदा क्रुद्धो मालोजिराजः समं स्वसैन्येन स्वश्यालस्य च सैन्यमादाय सर्वं जाधवरावस्य भूविभागमपीडयत्. परन्तु जाधवरावो न स्वाग्रहं मुमोच. ततश्च मालोजिराजो जाधवरावस्य शासनार्थमन्यामेव युक्तिमुपायुंक्त. स च महता वेगेन निजामशाहीराज्यं प्रविश्य दौलताबादनगरे स्वयंहतान् सूकरान् कण्ठनिबद्धसंदेशपत्रान् महंमदीयानामुपासनामंदिरेषु न्यक्षिपत्. अलिखच्च तेषु पत्रेषु 'अयं जाधवरावः प्रथमतः सभायां स्वकन्यां मदीयस्नुषां विधातुं दत्तवचनोऽपि स्त्रीप्रतिरोधात्तथाऽधुना नानुतिष्ठति. तदयमन्यायो

दूरीकर्तव्य इति. तां च वार्तामुपासनामंदिराध्यक्षाः स्वाधिपाय न्यवेदयन्. तां निशम्य निजामशाहीश्वरो यवनोऽत्यन्तं चुकोप. स सत्वरमेव तं जाधवरावं समाहूय परं निरभर्त्सयत्. अवदच्च—यूयं सभायां तथोक्त्वा पुनरपि स्त्रीबुद्धिमाश्रित्य निवर्तध्वे ? एतदर्थमेव मालोजिराजेनास्माकमुपासनामंदिराणि दूषितानि. तदिमं वृथाकलहं विहाय तस्य पुत्राय कन्यां दत्तेति. जाधवरावस्तु स्वस्वामिन इदं वचनं निशम्य मूढमतिरपि धैर्यमवलंब्य 'अयं मालोजिः केवलं मानादिनाऽस्माकं सदृशो नेति तथाकर्तुं विचारयाम' इति जगाद. यवनाधिपोऽपि तदानीमेव मालोजिराजमाहूय द्वादशसहस्रसादिनामाधिपत्यं, तथा चाकणशिवनेरीदुर्गे, पुणेंसुपेप्रान्तविभागौ तस्मै वितीर्य राजेपदव्या तमभूषयत्.

वस्तुतस्तु यवनोपासनामंदिरदूषणं नाम मालोजिराजस्यैवापराधः. तेन स एव दण्डार्हस्तथापि तस्मिन् समये दिल्लीश्वरो दाक्षिणापथस्थानि यवनराज्यानि नाशयितुमुद्यतः, तत्प्रतीकारार्थं च दक्षिणापथस्था यवनाधिपा महाराष्ट्रस्थान् क्षत्रियान् स्वानुकूलान्विधातुं प्रायतन्त. एतस्मादेव कारणात् मालोजिराजस्तेन यवनाधिपेन न दण्डितः. ततश्च मालोजिराजं सर्वथा स्वानुरूपमवलोक्य जाधवरावोऽगत्या स्वकन्यां मालोजिराजस्य पुत्राय शहाजिराजाय विततार. वाचकाः.

विवाहोत्सवस्तु स्वयं यवनाधिपेनाधिष्ठित इति लोकोत्तर एव बभूव. मालोजिराजोऽपि स्वयोग्यतानुरूपं धनव्ययं विधाय सर्वानतोषयत्.

एवं स्वपराक्रमैरुत्कर्षं लब्ध्वा राज्यकर्मणि परां योग्यतां दर्शयन्तो भूयोभूयोऽधिकमेव सन्मानं प्राप्य मालोजिराजा स्वार्जितस्य भूविभागस्योपभोगं पंचदशवर्षपर्यन्तं गृहीत्वा दिवं जग्मुः. शहाजिराजश्च तत्स्थानं लेभे.





# ३ –पितृचारितम्.

१. शहाजिराजस्य निजामशाहीराज्यसेवा.

२. विजापुरेश्वरसेवा.

३. जिजादेव्याः स्वभावः

( १ )

शहाजिराजश्च स्वपितृस्थानं लब्ध्वा यदा राज्यकार्याणि कर्तुं प्रारभत तदा तस्य यवनराज्यस्य प्रधानमंत्री मलिकंबरनामा यवन एवासीत्. स च परमचतुरः स्वराजधानीं देवगिरिसमीपे नूतनं खडकीनामकं नगरं निर्मायाकरोत्.

अथाजिगदेव मोंगलकुलसंभूतो जहांगीरनामा दिल्लीश्वरः स्वपुत्रं महता बलाढ्येन सैन्येन सह महाराष्ट्रदेशवर्तीनि यवन-

राज्यानि आक्रमितुं प्रेषयामास. स तु प्रथमं निजामशाहीराज्यमेवा- चक्राम. मंत्री मलिकंबरः प्रथमतो महता धैर्येण तत्प्रतीकारमारभत, परन्तु शीघ्रमेव पराजितः पलायनेनात्मानं ररक्ष. प्रधानमंत्रिणं मलिकंबरं पराजितमवलोक्याऽपि अत्यक्तधैर्यः श्रीशहाजिराजो महता साहसेन भूयोभूयो निभृताक्रमणैर्मोंगलसैन्यं जर्जरमकरोत्. तदानीं मोंगलसेनापतिः शहाजहानो मनस्यचिन्तयत्. यावदिमे क्षत्रिया इदं निजामशाहीराज्यं रक्षन्ति तावदिदमजय्यमेव. तदिमे कयाऽपि युक्त्या भेदनीया इति. विचिन्त्य चैवं निजामशाहीराज्यस्याधारभूतान् सहाय- कान् क्रमेण धनादिना वा मानादिनाऽभेदयत्. तेषु च शहाजिराज एव स्वामिद्रोहमकृत्वा सर्वं धनमानादिकं निराकृत्य स्वामिपक्ष एवा- तिष्ठत्. तदीयः श्वशुरो जाधवरावस्तथाऽन्ये प्रमुखाः सामन्ता लोभा- कुलाः स्वामिद्रोहं विधाय शत्रुपक्षमवालम्बन्त. अन्येऽपि साधारणा दिल्लीश्वरस्य सामर्थ्यमवेक्ष्य भीतास्तदनुकूला अभवन्. प्रधानमंत्री मलिकंबर एवं स्वकीयानां द्रोहमालोच्य दुःखाकुलः कथमपि दिल्ली- श्वरेण संधिं विधायात्मानममोचयत्. जगाम च स्वर्गं लोकं.

दिवंगते मलिकंबरे पुनरपि संधिं विहाय दिल्लीपतिर्जाधवरावस्य साहाय्येन युद्धं प्रावर्तयत्. अस्मिन् समये बालं निजामशाहीश्वरं रक्षितुं शहाजिराजादन्यः कोऽपि नासीत्. वाचकाः ? पश्यत दुर्दै- वस्य प्रभावं. यो हि निजामशाहीराज्येश्वरः प्रभूतसामन्तमण्डलव- न्दित आत्मानं शक्रादपि श्रेष्ठममन्यत, तद्वंशजमेव बालं प्राणरक्षार्थं

निभृतमरण्यादरण्यान्तरे पर्यटन्तमालोक्य कस्य मनो न दुःखायेत. केवलं शहाजिराज एवैकाकी तं बालं तथा तदीयां मातरं रक्षन् कथमपि अवर्तत. अत्रान्तरेऽकस्माद्दिल्लीश्वरो जहांगीरः परलोकमगात्. तेन तदीयः पुत्रः शहाजहानः सिंहासनाधिरोहणाय दिल्लीनगरमगच्छत्. गमनसमये च स जाधवरावं महता सैन्येन समन्वितं विधाय निजामशाहीराज्याक्रमणार्थमयोजयत्. प्रकृतिचतुरः शहाजिराज एनं स्वल्पमवसरं लब्ध्वा तं स्वस्वामिनं मात्रा समं माहुलीदुर्गेऽस्थापयत्. जाधवरावश्च निजामशाहीश्वरं तस्मिन् दुर्गे निवसन्तमाकर्ण्य तद्दुर्गं प्रतिरुरोध. प्रतिदिनं क्रमेण तं दुर्गरोधं दृढं चक्रे. श्रीशहाजिराजस्तु क्रमेण वर्धमानं शत्रोर्बलमवेक्ष्याऽपि अनिराशो धैर्यमवलंब्य शत्रोराक्रमणानि विफलीकर्तुं प्रायतत. परन्तु यदाप्रभृति राजमातरं कपटमतिना राजद्रोहिणा जाधवरावेण बद्धस्नेहामपश्यत्तदारभ्य खिन्नः कथमपि आत्मानं ततो मोचयितुं मनश्चक्रे. शीघ्रमेव वनान्धकारप्रावृतसकलदिग्भागे मध्यरात्रे तं बालं पुनरपि गृहीत्वा तस्माद्दुर्गादवतीर्य शत्रुसैन्यभेदं विधाय सिंधखेडकरस्य स्वमातुलस्य प्रदेशमालक्ष्य जवेनाधावत. तदानीं माता जिजाईदेवी गर्भवत्यपि स्वपतिना समभुत्साहेन दधाव. अचिरादेव लब्धवृत्तः स जाधवराव आश्विकदलेन समं तमनुससार, परन्तु भाग्यशाली शहाजिराजः शीघ्रमेव स्वामिना समं स्वमातुलस्य प्रदेशमाययौ. तं च मातुलस्य

प्रदेशमागतमालोक्य स्वनाशभीत्या जाधवरावस्तदनुरोधं त्यक्त्वा पुनरपि माहुलीदुर्गस्य समीपे स्थितं स्वस्कंधावारमाजगाम.

इतश्च निजामशाहीराज्येऽधिकारपरिवृत्तिरभूत्. अन्य एव कश्चन निजामशाहीराज्येश्वरो नाम भूत्वा दिल्लीश्वरं पराजयत. तेन लोभाकुलो जाधवराव: पुनरपि दिल्लीश्वरपक्षं त्यक्त्वा निजामशाहीराज्यं सेवितुमाययौ. स तु कपटमतिर्जाधवरावं सपुत्रमनुग्रहीतुमिच्छन्निव सभामाहूय घातकै: पूर्वं संकेतितैरघातयत्. शहाजिराजस्तु स्वश्वशुरस्य तथा स्वश्यालस्य च राजसभायां वधमाकर्ण्य दु:खाकुलो मनस्यकरोत्—इमे यवना महापापा: कृतघ्ना: सर्पा इव कदा केन विधिनाऽश्रितानां प्राणानपहरिष्यन्तीति ब्रह्माऽपि न जानाति. वयं च शूरा अपि निश्चयहीना उदरभरणार्थमिमानाश्रित्यैवमकाले बलीभूत्वा परलोकं व्रजाम:. तस्मात् स्वतंत्रमेव राज्यमधुना स्थापनीयमिति. मत्वा चैवं प्रयतमान: क्रमेण प्रबलीभवन्तं दिल्लीश्वरं विलोक्य स्वतंत्रराज्यस्थापनोद्योगादुपरत: पुनरपि निजामशाहीराज्यरक्षणार्थं कृतनिश्चय: सत्वरं विजापुराधीशमास्मिन् कर्मणि साहाय्यविधानाय विज्ञापयामास. स च प्रबलाद्दिल्लीश्वरादिभ्यश्निजामशाहीराज्यरक्षणे साहाय्ययितुं प्रतिजज्ञे. शहाजिराजश्च तस्मिन्नेव क्षणे तदीयसेनां तथा स्वकीयमशेषं सैन्यं गृहीत्वा तं कृत्रिमं निजामशाहीराज्याधीश्वरं पराजित्य स्वरक्षितं बालमष्टवर्षं निजामशाहीराज्यसिंहासनेऽस्थापयत्.

पराजयत च दिल्लीश्वरसेनापतिं. एवं सर्वत्र उत्कर्षशालिनं तं शहाजिराजमवलोक्य निजामशाहीराज्यस्य मौलाः प्रधानपुरुषाः शूराः सेनानायका इतस्ततो भ्रमन्तः शूराः सेवकास्तस्य स्वामिराज्यरक्षणदक्षस्य शहाजिराजस्य साहाय्यार्थमागच्छन्. शहाजिराजोऽपि तान् सत्कृत्य तेषां साहाय्येन प्रबलानपि दिल्लीश्वरसेनानायकान्निर्जित्य सर्वं तदाक्रान्तं स्वस्वामिराज्यविभागं स्वायत्तीचक्रे.

( २ )

स्वाधिकारिणो निष्कास्य सेनां च निर्भिद्य पुनरपि शहाजिराजेन निजामशाहीराज्यस्य स्थापना कृतेति निशम्य विस्मयमग्नोऽपि दिल्लीश्वरः शहाजहानः परं संततः स्वसैन्यविभागं संनाह्य तांश्चतुर्धा विभज्य सुरक्षितांश्चतुरस्सेनापतीन्समन्तान्नियोज्य स्वयं दक्षिणापथमाजगाम . सर्वस्यास्य निजामशाहीराज्यस्य मूलभूतं शहाजिराजमेव पराजेतुं स प्रथमतः प्रायतत परन्तु यशो न लेभे. रणधीरेण शहाजिराजेन वंचिता दिल्लीश्वरस्य सेनापतयः स्वामिनः कोपं परिहर्तुं ‘शहाजिस्तावत्क्षुद्रः. क्षुद्रस्य सहाये नाशिते सोऽनायासेन विपद्यते. तस्मादस्य सहायं विजापुराधीशं प्रथमतः पराजेष्यामहे. ततः शहाजिमपि द्रक्ष्याम’ इति स्वामिनं जगदुः. सोऽपि तदेव न्याय्यं मन्यमानः सहसा विजापुरराज्यं प्रविश्य सर्वं भस्मसात्कुर्वन् शीघ्रमेव विजापुरनगरं रुरोध. विजापुराधिपस्तु तदानीं परं भीतो महता विनयेन

दिल्लीश्वरं शरणं गत्वा कृपामयाचत. दिल्लीश्वरोऽपि क्षमां विधाय कृतसंधिस्तं शहाजिराजस्य नाशार्थमाज्ञापयत्. यदि च शहाजिराजः संतोषेण सर्वाणि दुर्गाणि तथा भूविभागान् मोक्ष्यति तदा न दण्डनीय इत्यपि विख्यापयामास. ततश्च दिल्लीश्वरः सर्वेण सैन्येन समं शहाजिराजं विजेतुमन्वधावत्. शहाजिराजोऽपि धैर्यमवलंब्य यथाशक्ति दुर्गानुरोधेनायुध्यत, परन्तु मोंगलसेनासागरस्य पुरस्ताच्छीघ्रमेव निरुद्धवीर्यो बभूव. ततो महता दुःखेन स्वकीयानि सर्वाणि दुर्गाणि तथा भूविभागान्दिल्लीश्वराय समर्प्य स्वयं विजापुराधीशं सेवितुं विजापुरनगरमगात्. विजापुराधीशस्तु तं गुणिनं स्वामिभक्तं शहाजिराजं सत्कृत्य पुनरपि तस्मै महादुर्गमण्डितान् भूविभागान् ददौ. शहाजिराजोऽपि लब्धसत्कारो विजापुराधीशं सपरिश्रमं सिषेवे. प्रबलजननिवासे कर्णाटकप्रदेशे तस्य विजापुराधीशस्य स्वामित्वं स्थापयितुं चिरमयुध्यत. महता चातुर्येण सर्वमपि कर्णाटकविभागं स्वायत्तीकृत्य विजापुरराज्यमर्यादामवर्धयत्. महता प्रदेशेन प्रवृद्धं स्वीयं राज्यं विलोक्य सन्तुष्टो विजापुराधीशस्तं सर्वं प्रदेशं तस्मै एव ददौ. शहाजिराजोऽपि तस्मिन्नेव प्रदेशे तिष्ठन् पुणेंसुपेंनामके विभागे कदापि पुनर्नागच्छत्. तत्र च दादोजिकोंडदेवनामकं स्वामिभक्तं विप्रं नियोजयित्वा तद्द्वारा सर्वं कार्यमकरोत्.

वाचकाः! एतावत्पर्यन्तं यन्मया श्रीशहाजिराजस्य चरितं वर्णितं तत्र तदीयमलौकिकं बुद्धिचातुर्यं परिदृश्यत एव. नैतावदेव

किंतु तस्य मनसि स्वतंत्रराज्यस्थापना कर्तव्येति विचारः कथं सूक्ष्मरूपेणासीदिति स्पष्टमालक्ष्यते. परिस्थितेर्विषमतया स विचारः सफलो नाभूदित्यन्यदेतत्. इम एव संस्काराः शिवराजं प्रविष्टा बद्धफला अभवन्.

( ३ )

सज्जनाः! इदमपि भूयोभूयो दृश्यते यद्बाला मातृशीलमनुसरन्ति. अत्र च कारणं तासामतिसांनिध्यमेव. यथा हि द्रुतं सुवर्णं निराकारं यां कामपि आकृतिं धत्ते, यथा निर्मलं प्रकाशान्वितं दर्पणं समीपस्थस्य वस्तुनः प्रतिबिंबं, तथा जातमात्रस्य बालस्य निराकारा बुद्धिरतिसांनिहितस्य गुणाननुकुरुते. अतिसंनिहिता च बालस्य माता नान्य इति निर्विवादं. तस्माद्यो यवनानां जेता गोब्राम्हणानां रक्षकः शिवराजो लोकोत्तरो बभूव तत्र कारणं तदीयाया मातुरसाधारणा गुणाएव. तज्जिजादेव्याः संक्षेपतश्चरित्रं वर्णयामि.

माता जिजादेवी जाधवरावस्य कन्या. तस्या विवाहः श्रीशहाजिराजेन समं कथमभूदिति पूर्वं वर्णितमेव. तस्मादेव कारणात् जाधवरावस्य तस्यां तादृशं प्रेम नासीदिति तर्क्यते. अतएव यदा जाधवरावो दिल्लीश्वरसेवको भूत्वा निजामशाहीराज्यनाशार्थमयुध्यत तदानीं शहाजीराजो जाधवरावस्य सेनाया व्यूहं भित्त्वाऽपलायत,

तदा तेन समं गर्भवत्यपि जिजादेवी अश्वमारुह्याधावत. मध्ये च गर्भस्य कठोरतयाऽश्वेन धावितुमशक्नुवानां जाधवरावोऽगृह्णात् पप्रच्छ स्वगृहागमनाय परन्तु मानिनी सा तमत्यन्तं स्वपतिद्वेषमनुसृत्य निरभर्त्सयत्. तथापि स स्नेहवात्सल्यात् सैनिकगोपितां तां कृत्वा जामातृमित्ररक्षिते शिवनेरिदुर्गे निवासार्थं प्रेषयामास.

वाचकाः! अस्मिन् लोके जना उन्नतिं गतास्ते सर्वे मानधना एव. यदि च मानवो मानं जहाति तदा तृणसमस्य तस्य नास्त्युन्नतेराशाऽपि. श्रीरपि धूत्कृतो न पुनस्तस्य समीपमायाति. सोऽयमलौकिको मानो योऽविरतं तेषु तेषु प्रसंगेषु शिवराजे पर्यदृश्यत मातृत एव स समाजगामेति ज्ञायते. अनेनैव स पितृवचनसेवामकृत्वा स्वतंत्रं राज्यमस्थापयत्.

अपरं च तस्यां सकलसंकटानुभवेन प्राप्तं विपत्परिहारचातुर्यं परमासीत्. शहाजिराजः प्रतिदिनं नानाविधा विपदोऽनुभूय स्वराज्यं स्थापयितुं यदा प्रायतत, तदा माता जिजादेव्यपि तत्संनिहिता सर्वं वृत्तमवलोकयामास. तेन कीदृश्यां विपदि धैर्यमवलंब्य तस्या निवारणार्थं कथमुपाया योजनीया इति सा सम्यगजानात्. अयमपि गुणः शिवराजे प्राधान्येन प्रकटीबभूव.

तृतीयश्च गुणो जिजादेव्यामुत्साहातिशयः प्रारब्धकर्मणोऽपरित्यागश्च . इमावेव द्वौ गुणौ श्रीशिवराजं परमुत्कर्षं प्रापयताम्. वाचकाः ! यया खलु लोकोत्तरं पुण्यश्लोकं श्रीच्छत्रपतिशिवाजिमहाराजं जनित्वा सकललोकमातृता संपादिता तां जिजादेवीं वर्णयितुं कः शक्नुयात् ! अस्तु.





## ४–शिवराजजन्म, बाल्यं च.

१ शिवराजजन्म.

२ बाल्य एव धर्मप्रीतिभूतदययोरंकुराः

३ निरतिशया स्वातंत्र्यप्रीतिः

४ पुण्यपत्तनवासः.

( १ )

अस्ति सुप्रसिद्धात् पुण्यपत्तनात् पंचाशत्क्रोशैः परं, सह्याद्रितुंगशिखरपरिवेष्टितं, शिवराजरूपेण भारतमवतरतः शिवस्य क्लेशपरिहारार्थं भगवता विधिना विरचितं गगनांगणसोपानपथमिव, सर्वतः क्रूरवन्यपशुगणनिवासीभूतैर्मध्याह्नेऽपि ग्रीष्मेऽपि रविकिरणाप्रकाशितदरीसहस्रसमलंकृतैर्विस्तृतैररण्यैर्व्याप्तं, स्थाने स्थानेऽमृतमधुरजलपरिपूर्णाभिर्वापीभिस्तथा सरसिजानामाकरैस्तडागैर्भूषितं, महाराष्ट्जनहृदयपटलेनेवाभेद्येन यवनानां भयंकरैः शतघ्नीनिक्षिप्तैरयोगोलकैरपि अच्छेद्येन प्राकारवलयेन परिरक्षितं, शिवनेरिनामकं महादुर्गम्.

यच्च सम्प्रति क्लिन्नगात्रि, स्थाने स्थाने विदीर्णप्राकारवलयमपि, सर्वतः प्रवृद्धेन घाससंचयेन समाच्छादितमपि, अव्यवस्थितपुण्यश्लोकशिवराजजन्मस्थानमपि, वन्यपशुनिवासभिभवमपि, नष्टं, दुर्दैवपीडितं महाकुलीनमिव पश्यतां मनसि कौतुकं समुत्पादयति. निवोधयति च सर्वस्याप्यैश्वर्यस्यानित्यत्वं. समुपदिशति ऐश्वर्यगर्वभारभृतान् सर्वथा तं गर्वभारं हातुं. अस्तु.

अस्मिन्नेव दुर्गे दिल्लीश्वरपक्षपातिना जाधवरावेण सह युध्यमान श्रीशहाजिराज स्वकुटुम्ब [illegible] निर्गमिषुर्माहुलीदुर्गान्निर्गत कठोरगर्भा [illegible] भार्या जिजाबाई सेवकजनैः सह स्थापयामास. माता जिजाबाई पतिसेवाविरहं परदेशे यापयितुमनिच्छन्ती स्नाय ज्येष्ठं पुत्रं संभाजिराजमपि तेन सह प्रैषयत्. तत्र च निवसन्ती सा जिजाबाई प्रतिदिनं दुर्गान्तरेण वातेन तथा सर्वतः प्रसृतानामरण्यानां श्रिया सेवितापि [illegible] भर्तृचिन्तयाऽन्तःपरमपीड्यत. सर्वे जनास्तां परं सान्त्वयामासुः परन्तु पतिव्रता सा तां चिन्तां सर्वथा न मुमोच. सा च प्रकृत्यैव श्रद्धाशालिनी तद्दुर्गवासिनी शिवाईनाम्नी देवी प्रार्थयत—यदि मम पतिर्ज्येष्ठेन पुत्रेण समं सुखी स्याद्यथ च [illegible] तदा मद्गर्भवासिनमिमं बालकं त्वन्नाम्नाऽहं [illegible]. [illegible] माता जिजाबाई गतिपुत्रचिन्ताव्यग्रमानसाऽपि स्वपुत्रस्य गर्भवासिनो भाग्योदयसूचकान् दोहदाननुभूय सा परं सुखाप्रतस्म. सा च भिन्नान्

भिन्नान् दोहदानन्वभवत्तथा स्वप्नांश्च ददर्श तथापि बाहुल्येनेममेव स्वप्नं साऽनुभवतिस्म. भगवती भारतभूमिर्गोरूपधरा केनचि-द्विकरालदन्तपंक्तिनाऽऽरक्तनयनेन खड्गहस्तेन राक्षसेन समा-क्रान्ता भीतिविव्हला स्वप्राणरक्षार्थं कैलासवासिनं परमेश्वरं प्रार्थयत. स शीघ्रमेव जिजादेव्या गर्भं प्राप्य निर्गत: खड्गाघातेन तं राक्षसं जघानेति. इमं च स्वप्नं तथा यवनानां नाशार्थं जायमानां तीव्रेच्छां मनसिकृत्वा सा स्वगर्भवासिनं पुण्यश्लोकं गोब्राह्मणप्रतिपालकं भविष्यन्तं मेने. वाचका: ? ईदृशं शुभसूचकं स्वप्नं तथा दोहदं च समनुभूय कस्याश्चित्तं संतोषं न भजेत! सा च तं स्वप्नं तथा दोहदं च स्वाश्रितेभ्यो ज्योतिर्विद्भ्य: कथयन्ती तानपि प्रमोदमग्नान-करोत्.

एवं महता सन्तोषेण परिपूर्णेषु नवसु मासेषु सा त्रैलोक्य-माननीया जिजादेवी सकलगोब्राम्हणप्रतिपालकं सनातनधर्मरक्षकं शकस्य प्रवर्तयितारं श्रीच्छत्रपतिशिवाजिमहाराजं प्राची सूर्यमिव प्रासूत. वाचका:? सर्वत: क्रूरयवनैराक्रान्तेषु भारतवासिषु, बलादेव निहन्यमानेषु ब्राम्हणेषु धेनुकेषु च, कोपातिरेकेण नाशितेषु देवालये-षु देवताप्रतिमासमूहेषु च, दासीक्रियमाणासु आर्यमहिलासु सतीषु साक्षाच्छंकर: सत्या जिजादेव्यास्तनयो भूत्वाऽवततारेति मन्यमाना जना: परं ननन्दु:. तस्मिन्दिने निर्मलं रविप्रकाशं, मन्दमन्दवाहिनं परिमलसुगन्धिनं वातं, तथा होमाग्नींश्च निर्धूमानवलोक्य साश्चर्या

विद्वांसः स्वभाग्योदयमदुरवार्तनमसन्यन्त. सर्वेऽपि शहाजिराजाना-माश्रिता जनास्तत्तनयजननं श्रुत्वा प्रहृष्टा उत्सवं कुर्वन्तस्तद्वृत्तं शहाजिराजेभ्यो निवेदयितुं दूतान् प्रैषयन्. ब्राम्हणाश्च स्वयं स्वस्ति-वाचनार्थमागताः संप्रमोदेन द्विगुणा आशिषोऽदुः. सुवासिन्योऽपि पूर्णघटसालंकृतमस्तका मानवरूपधारिण्यो गाव इव तद्भवनद्वारमाग-त्य जलाभिषेकं चक्रुः ततश्च जातकर्मविधानुमाहूता विद्वांसो विप्रवरास्तस्य जातकं सर्वानपि ग्रहान् समालोक्य विस्मिता भाविनं सार्वभौमं समशंसन्.

अथ परिपूर्णेषु दशदिवसेषु पुत्रस्य नामकरणमहोत्सवः सम-जायत. सर्वानपि निमन्त्रिताय बालकस्य किं नामधेयं विधेयमिति प्रष्टुमागतान् स्वामिभक्तान् मंत्रिणस्तथा विप्रान् सा माता जिजादेवी जगाद्–अहमेकदा सुखेन सुप्ता स्वप्ने कैलासलोकमपश्यम्. तत्र च मिलिताः सर्वे देवगणाः सर्वं पृथ्वीवृत्तमुमापतये निवेद्य स्वधर्मं रक्षितुं तथा गोब्राह्मणान् पालयितुं तं प्रार्थयन्त. सोऽपि सर्वज्ञस्तान् मधुरैर्व-चनैराश्वास्य जगाद्–देवाः! अहमचिरादेव शिवनाम्ना परमपवित्रे भोसलेकुले क्षत्रियवरात् शहाजीराजाज्जिजादेव्यां प्रकटीभविष्यामि! इति. तदानीमेव बालरूपधरः शंकरो मदीयमुदरं प्रविवेश. तेन कारणे-नाऽपि अस्य पुत्रस्य नाम ‘शिव’ इत्येव स्थापनीयमिति. एवमाज्ञताः श्रुते वृत्तान्ते परं विश्वसन्तस्ते सर्वेऽपि आश्रितास्तथैव नाम विधाय तां वार्तां सर्वत्र प्रसारयामासुः

(२)

वाचकाः ! एवंक्रमेण मृत्युलोकमागतः शंकरः शिवराजनाम धृत्वा प्रतिपच्चन्द्र इवावर्धत. यदा च स दशवर्षोऽभूत्तदा तं पिता शहाजिराजो यवनराजधानीं विजापुरनगरमानयत्. शिवराजस्तत्र-त्रीणि वर्षाण्युवासेति प्राचीनेतिहासविदां मतं. विजापुरमधिवसतः श्रीशिवराजस्य बाल्येऽपि सद्गुणानवलोक्य शहाजिराजस्य मित्राणि परं समतुष्यन्. तासु च मुरा[illegible] यवनाधिपस्य प्रधानमंत्री-शिवराजस्य गुणान् [illegible] स्वस्वामिनः समीपे प्रशंसां चक्रे. तेन च विस्मितः स यवनाधिपः सभायां स्थितान् शहाजिराजानवदत् 'श्वः स्वपुत्रं राजसभामानयत' इति. शहाजिराजा अपि एनां स्वस्वामिन आज्ञामंगीकृत्य गृहमागताः शिवराजाय स्वामिनियोगं तदनुकूलं स्वाभिप्रायं च निवेदयामासुः

शिवराजस्तु तं पितुर्नियोगं श्रुत्वा खिन्नोऽपि धैर्यमवलंब्य जगाद 'तातचरणाः ! पुत्रस्यैव धर्मो यत्पित्राज्ञापरिपालनं. जानाम्यहमिमं धर्मं. यावच्छक्ति अनुष्ठातुमुत्सहे च. परन्तु यवनाधिपस्य सभां गत्वा पापी स वन्दनीय इति न मे रोचते. येश्चास्माकं स्वातंत्र्यमपहृतं, दीनासु अबलासु गोषु तथा भारतमहिलासु पशुवदाचरितं, सनातनधर्मश्च बलादेव नाशितस्त एवार्यकुलसंभूतेन मया वन्दनीया इति महच्छोकास्पदं. मदीयो मातामहस्तथा मातुलश्चैभिर्निष्कारणं हतौ. सर्वथा प्रतीपाचरणेनास्मान् पीडयन्त इमेऽस्माभिः कथं वन्दनीया

इति तातपादा एव विचारयन्तु. मम तु बालस्येदमकर्तव्यमिति भाति' इति.

श्रुत्वा चेदं स्वपुत्रस्य शिवराजस्य भाषणं शहाजिराजाः निभृतं परं मुमुदिरे. यतस्ते प्रथमत एव स्वतन्त्रं राज्यं स्थापयितुमैच्छन्निति मया पूर्वमेव निवेदितं. तथापि लौकिकीं रीतिमनुसरन्तस्ते पुनरभ्यवदन्–वत्स! शिवराज! त्वदुक्तं सर्वमेव सत्यं तथापि साम्प्रतं सर्व एव दाक्षिणात्यवर्तिनः [illegible] ततः पारितोषिकलाभेच्छया [illegible] साभिनिवेशं प्रयतन्ते. यदि कश्चित् [illegible] तदा ते तं सहसा नाशयन्ति. [illegible] यवनाधिपात् साहाय्यं यान्ति. तदस्मिन् समये पितृपितामहप्रवर्तितां सेवां विधाय यदि त्वं स्थास्यसि तदा सुखं लप्स्यसे. अन्यथा वर्तमानमपि विनाश्य महादुःखमनुभविष्यसीति.

वाचकाः! इत्थं यद्यपि कालानुरूपं शहाजिराजाः शिवराजमुपादिशन् परन्तु यवनानां शासनाद्विवर्तिनः शिवराजो न तेनोपदेशेन सन्तुष्टः स्वकर्तव्यपराङ्मुखो बभूव. इत्येव शिवराजस्यालौकिकत्वं बुद्धौ प्रमाणं. ये चासाधारणा जनास्ते स्वकर्तव्यं स्वयं निश्चित्य तस्मिन् प्रवृत्ता न कस्याऽपि उपदेशेन प्रवर्तन्ते निवर्तन्ते वा. अतएव 'मूढः परप्रत्ययनेयबुद्धिः' इति साधारणानां लक्षणं. अस्तु. प्रकृत-

मनुसरामः. शहाजीराजाअपि राजसभागमने प्रतीपमतिं स्वपुत्रमालोक्य तूष्णीं तस्थुः, परन्तु विजापुराधीशः प्रतिदिनं तान् स्वपुत्रानयनार्थमवदत्. तेन चिन्ताकुलास्ते जिजादेव्यै सर्वं वृत्तं कथयामासुः सा च महता प्रयत्नेन केवलं राजसभागमनार्थं शिवराजमनुकूलं चक्रे. ततश्च पित्रा समं राजसभां गतः शिवराजः पितृवद्यवनाधिपमनत्वा साधारणरीतिमनुसृत्यैव राजवन्ननाम. यवनाधिपोऽपि शिवराजस्य तेजस्विनीमाकृतिमालोक्य परं विस्मितः 'कोऽयं' इति मंत्रिमुख्यमपृच्छत्. सोऽपि शहाजिराजानामयं पुत्रः शिवराजनामेति निवेदयामास.

शहाजिराजास्तु स्वस्य निन्दकांश्च स्वभार्यं तथा छिद्रान्वेषणतत्परान् स्वशत्रूंश्च जानन्तः पुत्रस्याभिवादनप्रकारं मनसिकृत्वा स्वामी मा कुप्यत्विति मनीषया सत्वरं प्राहु —स्वामिन्, ? अयं मे पुत्रः कदापि एतादृशीं महतीं राजसभां नापश्यत्. नापि स राजसभारीतिं जानाति तेनेतरजनवदभिवन्दितः स्वामी. इमं बालस्यापराधं दीनदयालुः क्षमाशील स्वामी मर्षयत्विति. यवनाधिपोऽपि शिवराजस्य तेजस्वि मुखमंडलं तथा भाग्योदयसूचिकां देहयष्टिमालोक्य सन्तुष्टः तस्मै महार्घाणि रत्नानि तथा वस्त्राणि च वितीर्य विसर्जयामास. शिवराजस्तु गृहमागतस्तानि सर्वाणि विप्रेभ्यो वितीर्य सस्नौ. अथ विजापुराधीशः शिवराजं प्रतिदिनं राजसभामागन्तुमाज्ञापयत्. शिवराजोऽपि तदाज्ञाभंगं पितुरनिष्टकरं मन्वानः कथंकथमपि

राजसभां जगाम. तत्र मार्गे विक्रय्यगोमांसानि पण्यगृहाण्यवलोक्य दुःखाकुलः शिवराज आत्मानं नरकवासिनं मेने. तान् गोघातकान् हन्तुमियेष. परन्तु पितृनियोगनिगडबद्धो न किंचित्कर्तुं पारयते स्म.

एकदा शिवराजः स्वपित्रा समं राजसभां गच्छन् मार्गे कृपाणेन गोः कण्ठं विदारयन्तं कंचन यवनमपश्यत्. तां च गोर्दीनां मुद्रां तथा भयकातरे चाक्षिणी निरीक्ष्य कोपपरीतमानसः शिवराजः पितृनियोगं सहसा समुल्लंघ्य तं यवनं यमालयं प्रैरयत्. तेन कुपिता यवना न्यायालयं गत्वा चुक्रुशुः. परन्तु शहाजिराजप्रेम्णा तं कोलाहलं यवनाधिपो न शुश्राव. यदा च स्थाने स्थाने गोमांसपरिपूर्णानि पण्यगृहाणि द्रष्टुमक्षमः शिवराजो राजसभागमनमेवामुंचत्, तदा स्वसभायामेकाकिनं शहाजिराजानमवलोक्य पुत्रस्यानागमनकारणमपृच्छत्. सम्यगभिज्ञाश्च शहाजिराजा यवनाधिपस्य प्रसन्नमन्तःकरणमवलोक्य विनयेन प्राह, 'स्वामिन्? आर्या हि गां देवतां मन्यन्ते. तस्या वधस्तान् दुःख्याकरोति. राजसभागमनमार्गे च सर्वतो गोमांसविक्रयार्थं पण्यगृहाणि सन्ति. तानि द्रष्टुमपारयन् मम पुत्रोऽद्य राजसभां नाजगाम. स्वामिपादा यथा यवनानां तथाऽर्याणामपि. बहवो हि यवना यथा स्वामिचरणान् सेवन्ते तथैवार्यास्तद्देशजाश्च. अतएवोभयधर्मपरिपालनं स्वामिनाऽवश्यमनुष्ठेयमिति. यवनाधिपोऽपि न्याय्यामेनां विज्ञप्तिं निशम्य सन्तुष्टान्तःकरणेन सर्वाणि गोमांसपण्यगृहाणि ततो निष्कास्य नगराद्बहिरवासयत्. घोषयामास च

'यदि कश्चनार्यो राजमार्गे गां घातयन्तं कमपि यवनं रोषाद्धन्यात्तदा तस्य शासनं न्यायालयान्न भविष्यतीति. एवं राजनियममनुसृत्य नगराद्बहिर्गतेषु गोमांसक्रयकेन्द्रेषु शिवराजः पुनरपि राजसभामाययौ.

एवमेवैकदा शिवराजो ग्रामे पर्यटनार्थं गतो मार्गे गच्छतो ब्राह्मणस्य हस्तात्कुत्र्यादेव गामाच्छिद्य तां हन्तुमुद्यतं यवनमपश्यत्. स तु यवनो यौवनोन्मत्तो न केवलं तस्यैव गामपजहार किंतु ब्राह्मणं तथाऽताडयद्यथा ब्राह्मणो नष्टचेतनो भूत्वा भुवि पपात. शिवराजश्चेमं प्रकारं विलोक्य क्रुद्धस्तं यवनं निहत्य तां गां तस्मै ब्राह्मणाय वितीर्य दक्षिणामपि ददौ.

एवंविधाः प्रकाराः प्रतिदिनमभवन्. तेन च नगरवासिनः सर्वे यवनाः कोपाकुला मिलित्वा शिवराजनाशार्थमैच्छन्त. कतिपये विजापुराधीशं प्रार्थयन्त.

(३)

शहाजिराजाश्च पुत्रस्यैतानि सुलक्षणानि कर्माणि वीक्ष्य निभृतं मुदिता अपि तादृशं यवनद्वेषं सर्वानर्थकरं मन्वानाः साध्व्या जिजादेव्या मुखेन तं यवनविश्वासमेव विधातुं प्राबोधयन्. साध्वी सा माता जिजादेवी यदा तं प्राणप्रियं पुत्रं प्रेम्णा तथोपादिशत्तदा

शिवराजोऽपि विनयेन प्रत्युत्तरयामास. मातः? त्वदुक्तं सर्वमेव सत्यं. बलवन्तः सामर्थ्यशालिनः सार्वभौमा यवनाधिपा इत्यत्र न मे संशयः. बलवता समं दुर्बलेन द्वेषविधानं न नीतिर्नापि श्रेयस्करमित्यपि अहं जाने. तथापि दुर्बलान् विप्रानसहायाः स्त्रीर्वा गा वा पीडयतो यवनानवेक्ष्याहमात्मानमपि विस्मृत्याविचार्यैव तद्धननार्थं चेष्टे. अम्ब! दीनत्राणं नाम क्षत्रियाणां नः परमं कर्म. तद्यदि अस्माभि र्नानुष्ठीयते केवलमौदासीन्यमवलंब्यावस्थीयते तदा दुर्बलानां जगति जीवनमेवासंभवि. किंच मातः? अनेन दीनपालनकर्मणा कुपिता मदोन्मत्ता यवनाधिपा अस्मदीयं ग्रामादिकमपहरिष्यन्तीति तातपादा मां भूयोभूयो वदन्ति, परन्तु अहं वदामि यदि मदीयं कर्म परमेश्वरस्याभीष्टं स्यात्तदा स तेन कर्मणा सन्तुष्टो मह्यं यवनाधिपानां राज्यान्येव वितरेत्. यो हि न्यायेन सर्वान् पालयति तस्य राज्यं भवति नतु बलिष्ठानामपि चौराणां. तस्मात्तातेनैव न्यायेन वर्तनीयं. तेनैव कल्याणं भवति. अपिच मातः! यथा महंमदीयानामागमनात्पूर्वं क्षत्रियकुलसंभूता एव राजान इमां भुवमपालयन्. तेषु च नियमच्युतेषु सत्सु परमेश्वरः शासनाधिकारात्तान् प्रच्याव्य तमधिकारं महंमदीयेभ्योऽदात्, तथा साम्प्रतं पुनरपि तान् दुर्मतीनस्मांश्च सुमतीन् विलोक्य तं शासनाधिकारमस्मभ्यं कुतो न दद्यात्? तस्माद्यदि न्यायेन भारतवासिनः सर्वे क्षत्रिया वर्तिष्यन्ते तदा भारतवर्षे आर्याणां साम्राज्यमवश्यमेव भविष्यति. अम्ब? त्वमेव

विचारय ! यैः खलु अस्माकं राज्यानि नाशितानि, आर्याणां महिला दासीकृता, धनश्च भक्षिता, विप्राश्च दूषिता, क्षत्रियाश्च शूद्रवत्तंसीकृता, सनातनधर्मश्च मन्दिरनाशादिभिर्दुरुपायैर्नामशेषीकृतस्तेषामेव यवनानां पुरस्ताद्धस्तौ मुकुलीकृत्य भ्रातृस्थानं कस्य वा जनस्य अप्रियस्य संतोषाय भवत् ! को वा सत्कुलीनस्तस्मै स्पृहयेत् ! दुर्भरस्योदरस्य कृते एतावान् प्रयासः ! तत्तु यत्रकुत्रचिद्गत्वा यः कश्चिदपि कुर्यात् तावत्. [illegible] किं तु [illegible] शं[illegible]द्रूपादस्य हानिना भूयांसि न [illegible] क्षत्रियस्य. अहं तु मन्ये वरं वनवासः, वरं च पर्णकुटीषु शयनं, वरं च रूक्षान्नेन शरीरपालनं, वरं च कदन्नभोजनं, तथापि स्वातंन्त्र्येण जीवनं सर्वसुखभाजनमिति. अम्ब ! स्वमातृभूमिं पारतंत्र्यनरके स्थापयित्वा स्वकीयांश्च दासीकृत्य संपादितं वैभवं यस्य सुखं जनयति स मानवकुलोत्पन्न एव न. अहं तु मन्ये तं कीटं ! कीटा यथा नरकाय स्पृहयन्ति तथैवेदृशा मानवाधमाः पापेभ्यः कर्मभ्यः. तस्माद्दीनपालनं क्षत्रियाणां कार्यं न हास्यामि. तदर्थं सर्वं जीवनं यापयिष्यामि. यदि तु मदीयेनानेन कर्मणा पितृचरणेभ्यो वा तुभ्यं वा स्वल्पमपि दुःखं भवेत्तदाऽहमितो दूरं स्थापनीयः. तत्रैव स्थित्वा यथाशक्ति बलोन्मत्तानामेतेषां प्रतिकारं करिष्यामि. यद्भावि तद्भवतु. अत्र निवसता मया खलु गोहत्यादिकं द्रष्टुमशक्यं. दृष्ट्वा च मनसो नियमनं तु सुदुष्करं. तन्मातः ! त्वमेवेदं सर्वं पितृचरणेभ्यो निवेद्य दूरे मां प्रेषयेति.

वाचकाः! एतेन निसर्गत एव शिवराजस्य स्वातंत्र्यप्रीतिः कथमासीदिति स्पष्टं भवति. बाल्ये यादृशान् संस्कारान् बालो बिभर्ति तादृशसंस्कारशाल्येव सोऽग्रे भवतीति बहुशो दृष्टं. अतएव बलाढ्यान् यवनाधिपानगणयित्वा शिवराजः स्वराज्यं स्थापयितुं प्राभवत्. एतदर्थमेव मयोपलक्षणरीत्यैं तोऽयं भागो वर्णित.

( ४ )

माता जिजाईदेवी स्वपुत्रस्यैतां स्वातंत्र्यप्रीतिमवलोक्य सन्तुष्टा मनस्यचिन्तयत्- अहो? भाग्यशालिन्यहं! यस्यै मह्यं गुणनिधिरीदृशः सुतः परमात्मना प्रदत्तः. आर्यपुत्राश्च यद्यपि अस्मिन् कर्मणि निभृतमनुकूलास्तथापि विपरीतफलेऽस्मिन् सर्वथैवानागतमुत्प्रेक्षमाणा औदासीन्येन वर्तन्ते. तस्मादधुना तान् विज्ञाप्य यथाऽयं वर्तते तथैव करिष्यामि इति. विचिन्त्य चैवं सा सती एकदा रहसि शहाजिराजा नित्थं विज्ञापयामास.-स्वामिन् सांप्रतमिदानीं श्रीमन्तो घोरचिन्तामग्ना भासन्ते. यदि च सा चिन्ता शिवराजविषयिणी तदा सा हेया. युष्माकमात्मजो यस्मिन् कस्मिन् कुकर्मणि नावतु प्रवृत्तः किंतु पुण्ये कर्मणि. एते यवना अतिप्रमत्ता सर्वानपि निरतिशयं पीडयन्ति

कदाचित् सकलदीनजनप्रार्थनयाऽऽवर्जितः परमात्मा शिवरूपेणावतीर्य यवनशासनं कुर्यात्? किंच पुरा खलु 'अस्मत्कुले शकस्य कर्ता राजा भविष्यति' इति जगदम्बयाऽऽशीर्वादो दत्त इति श्वशुरचरणा मामवदन्. तदपि कदाचित् सत्यं स्यात्? सर्वथा यवनाधिपरोषो माभूदिति स शिवराज इतो दूरं स्थले स्थापनीयः. अहं च तेन समं तत्र निवत्स्यामि. यदि च शिवराजः सत्यमेव पराक्रमी भूत्वा शकस्य कर्ता भविष्यति तदा वरमेव. अथ च नैवं तदा तदीयैर्दुर्वर्तनैर्युष्माकं त्रासो न भवेदिति.

शहाजिराजाअपि साध्व्या जिजादेव्या इदं भाषणं निशम्य तथैव कर्तुं मतिमकुर्वन्. तदानीमेव दादाजिकोंडदेवनामा शहाजिराजानां परमविश्वासपात्रं सेवकः कोशवितरणाय विजापुरनगरमाययौ. तेन समं शिवराजं पुण्यपत्तनं प्रेषयितुं कृतनिश्चयास्ते तमेकान्तेऽवदन्. विप्रवर? त्वमासि मे द्वितीयं हृदयं मदीये शिवराजे केचनालौकिका गुणा दृश्यन्ते. स्वातंत्र्यप्रीतिश्च. तत्त्वं सुशिक्षणदानेन तं तथा संस्कुरु यथा बद्धमूला नैसर्गिकी स्वातंत्र्यप्रीतिर्महाफला भवेदिति.

स च विप्रवरः सेवकः शिवराजेन समं मातरं जिजादेवीं गृहीत्वा विजापुरनगरान्निर्गत्य कतिपयदिवसैर्विप्रकृष्टं पुण्यपत्तन-

माजगाम. तत्र च महान्तं सौधं निर्माय तस्मिन् मात्रा समं बालं केसरिणमपि शुभोदर्के शिवराजमस्थापयत्. शिवराजोऽपि सर्वतः प्रसृतैस्वर्गस्थायाः स्वातंत्र्यदेव्या अवतरणाय कृतैः सोपानैरिव सह्याचलस्य शिखरैः, प्रकृतिसरलैः पार्वतीयैर्निवासिजनैः, स्वधर्मनिरतैर्विप्रवरैश्च, संतोषितः स्वकीयां स्वातंत्र्यप्रीतिं पोषयामास. स्वामिभक्तो दादोजिकोंडदेवस्तथा माता जिजादेवी महता प्रयत्नेन सावधानेन च तस्य मनः शिक्षणेन संस्कृतं विधातुं प्रायतेताम्. बान्धवाः! सर्वस्य भाविनः कार्यस्य निदानीभूतं कीदृशं शिक्षणं शिवराजेन बाल्ये लब्धं. केन वा तत् प्रदत्तमिति वयमग्रिमप्रकरणे निरूपयिष्यामः





## ५ शिक्षणम्.

१ शिक्षणस्य सामान्यं स्वरूपं

२ धार्मिकशिक्षणं गुरुर्माता जिजादेवी.

३ व्यावहारिकशिक्षणे च गुरुर्दादाजीकोंडदेवः.

४ दृढोद्योगकारित्वे पितृचरणाः श्रीशहाजिराजाः

५ नानाविधयुद्धसन्नाहे च यवनराजधानीनिवासः

( १ )

वाचकाः ! सामान्यतोऽस्मिन् जगति ये खलु लोकोत्तरकर्मकारिणो मानवपुंगवा जातास्तेषां चरित्राणां सूक्ष्मया दृशाऽन्वालोचने तस्य कारणं प्राधान्येन शिक्षणमेवेति प्रतिभाति. इदं शिक्षणं पाठशालाभ्य एव लभ्यते नान्यत इति न कदाऽपि मन्तव्यम्. ये खलु स्वनामाक्षराणि लिखितुमपि न प्रभवन्ति तैरपि सुदुष्कराणि कृतानि कर्माण्यवलोक्य विद्वांसो विस्मयन्ते. योऽयं प्रसिद्धो दिल्लीश्वरो मोंगलकुलदीपोऽकबरनामा यवनराजोऽभूत् स स्वाभिधानवर्णानपि लिखितुं न प्राभवदिति प्राचीनेतिहासज्ञा वदन्ति. यद्यपि यादृशं

शिक्षणं पाठशालायां न दीश्यते तादृशमपि शिक्षणमन्यत एव लभ्यते तथापि तत्र कारणं खलु परिस्थितिरेव. परिस्थितिश्च गुरूणामपि गुरुः, पाठशालानामपि पाठशाला. यदि नैवं तदा कथयत ग्रीष्मे वस्त्राणि त्यक्तुं कः पाठयति शीतकाले च परिधातुं. सज्जनाः! सर्वत्र लोके सर्वासु चावस्थासु यथार्थशिक्षणस्य दात्री परिस्थितिरेव. अस्या एव परिस्थितेर्यथार्थाभ्यासार्थं स्थापिता इमाः पाठशालाः. तस्मादस्य यथार्थशिक्षणसंपादनेच्छा स्यात्तदा प्रथमं सावधानतया परिस्थितेरेवाभ्यासः कर्तव्यः. अस्तु. सकलप्रकाशन्य श्रीतुकारामरामदासप्रभृतयो ये साधुवरा अजायन्त ते न कुत्रापि पाठशालायां शिक्षिताः प्रत्युत स्वीयकुशाग्रमत्या सकलजगत्परिस्थितिं वीक्ष्य तैरीदृशा ग्रंथा लिखिता यान सांप्रतिका विद्वांसो न बुध्यन्ते. प्रियवाचकाः! नाहमनया युक्त्या पाठशालानां वैयर्थ्यं प्रतिपादयामि किंतु यथार्थशिक्षणं परिस्थितिनिरीक्षणेनैव जायत इति. प्रकृतमनुसरामः.

सा च परिस्थितिः सर्वत्रैव द्विविधा दृश्यते. धार्मिकी राजकीया च. तत्र धार्मिकी चित्तसंस्कारादिना परलोकमुपकरोति राजकीया च केवलमैहिकस्वास्थ्यकारिण्येवेति सांप्रदायिका वदन्ति. वस्तुतस्तु धार्मिक्यपि परिस्थितिर्नीतिसूत्रस्यादिशिक्षणेनेहलोकस्वास्थ्यमुपकरोत्येव. तथा राजकीयाऽपि स्वास्थ्यसंपादनद्वारा परलोकमुपकरोत्येव. अतएव प्राचीनैर्मुनिवरै राजधर्माचरणेनाऽपि मोक्षप्राप्तिः प्रतिपादिता. तस्माद्वि-

शेषरूपेण फलभेदोपपादनं नोचितम्. सामान्यतस्तादृशभेदकरणे न कोऽपि दोषः.

तत्र धार्मिकी परिस्थितिर्द्वितीयपरिस्थितेः कारणतया प्रथमतो निर्दिष्टा. उचितमपीदं. यतो राजा नाम प्रजासमष्टिरूपा व्यक्तिः. यथा हि सभानियमपरिपालनार्थं तत्रस्थैरेव सभ्यैः सर्वानुमत्या कश्चन विद्वान् स्वपुरोगः क्रियते तथैव यदा न्यायेन स्वपालनार्थं प्रजाजनाः कांचन सद्गुणशालिनीं व्यक्तिं सर्वानुमत्या स्वीकुर्वन्ति तदा तां राजत्वेन व्यपदिशन्ति सर्वे जनाः. एवंस्थिते तादृशव्यक्तिनिर्णयार्थं प्रथमतः समुदायप्रविष्टा जनाः सुशिक्षिताः अपेक्षिताः. अन्यथा चौरग्रामे सर्वैश्चौरैर्मिलित्वा स्वपुरोगत्वेन निर्णीतः कश्चन महाचौरो राजपदवाच्यो भवेत्. नैवमस्ति. तस्मात् धार्मिकसंस्कारसंस्कृता जना यं स्वाधिपं मन्यन्त स एव राजपदवीभाक् स्यात्. तथा च राजकीय-परिस्थितेः कारणं धार्मिकी परिस्थितिरिति अर्थादेव सिद्धं. सा च यदि समीचीना तदा राजकीया परिस्थितिरपि समीचीनैव भवति.

धार्मिकी परिस्थितिस्तु तदा समीचीनेत्युच्यते यदा मानवा परस्परं बन्धुभावेन वर्तन्ते, यदा परस्परं दुःखपरिहारपरा भूतदयया वर्तन्ते. एतदुक्तं भवति—आध्यात्मिकी परिस्थितिरेव धार्मिकपरिस्थिति-शब्देनोच्यते. दृष्टचरं चैतत्. यदा हि राष्ट्रघटकानां जनानां चेतांसि कुसंस्कारैर्दूषितानि भवन्ति तदानीं तदखिलमपि राष्ट्रं बलाढ्यमपि

राजयक्ष्मजर्जरीकृतं कलेवरमिव क्रमेण नश्यति. अतो वर्धिष्णुना राष्ट्रेण वा तत्स्थजनसमुदायेन वाऽऽध्यात्मिकशक्त्यपरपर्याया धार्मिकी शक्तिः प्रथमं संपादनीया.

किंच—कस्यापि कार्यस्य सिद्धौ तत्कर्तुरात्मनि विश्वास-आवश्यकः. यो हि आत्मन्येवाविश्रब्धः स कथं परस्मिन् विश्वसेत् ? जगति य भूतदयाप्रकारास्तथा नीतिप्रकाराश्च समुपलभ्यन्ते, ग्रंथेषु च तेषु तेषु लिखितास्तेषां सत्यत्वमात्माभिप्रायेणैव वक्तव्यम्. तथा च यस्य चित्तं न सुसंस्कृतं स मलिनचित्तः कथं मलिनदर्पण आत्म-प्रतिबिंबमिव स्वचित्ते वनमतां सदसद्विवेकबुद्धिमुपलभेत ! कथं च तदनुकूलं वर्तेत ! अतः केनापि भव्येच्छुना प्रथमतः साधुशीलसंपा-दनाय धर्मशिक्षणमवश्यं ग्राह्यं. वाचकाः ! यः खलु परस्त्रीषु मातृ-वद्वर्तेत, परकीयेषु बन्धुभावेन, परद्रव्येषु निरासक्त्या, तेनास्मच्च-रित्रनायकेन कीदृशी धार्मिकी शिक्षा संपादिता, तन्मात्रा च तस्मै कीदृशी दत्तेति विचारयामः

(२)

साध्वी माता जिजादेवी प्रत्यहं रामायणमहाभारतादीनि नैतिहासप्रधानानि पुराणान्यश्रृणोत्. तदानीं सा प्रथमतः 'रावणा-दीनां परस्त्रीच्छलप्रमुखानि कुकर्माणि कथयित्वा पश्चाद्बलिप्रभृत्यापि

रावणस्य केवलं वनवासिना रामेण वानरसाहाय्यं लब्ध्वा कथं पराजयः कृतः! सकलसामर्थ्यसंपन्नानां संख्ययाऽप्यधिकानां कौरवाणां द्रौपदीच्छलेन कथं समूलं नाशोऽभवत्. अनाथाश्च पाण्डवाः सत्यपक्षतया भगवताऽनुगृहीताः कथं व्यजयन्त, दुर्बलानां पीडने तद्रक्षणार्थं कथं भगवान् स्वयमवतरति' इत्यादीनां कथानां कथनेन बालस्य शिवराजस्य चेतः सुसंस्कृतं चक्रे. सज्जनाः! इतिहासो नाम मूर्तिमती यथार्थज्ञानदायिनी पाठशालैव. ततो हि भिन्नभिन्नप्रकृतीनां जनानामुदयविनाशास्तथा तत्कारणानि च ज्ञायन्ते. इदं च महत्तरं कर्म कृतं मात्रा जिजादेव्या यत् प्रथमतो बाल्ये एवाविकृतं श्रीशिवराजस्य चेतस्तया पुण्याभिः श्रीरामचंद्रादीनां कथाभिः पवित्रीकृतम्.

किंच–माता जिजादेवी खलु जाधववंशसमुत्पन्नाऽऽसीत्. तत्कुलपूर्वजा देवगिरिदुर्गे स्वतंत्रा राजानो राज्यमकुर्वन्. तांश्च हत्वा तद्राज्यमपि यवनैर्बलाद्दासीकृतेति सर्वं प्राचीनं वृत्तं सा सम्यगजानात्. तथैव स्वपतेर्निजामशाहीराज्यरक्षणे दुःखानि, स्वस्य कारागारवासं, स्वबन्धोस्तथा स्वपितुश्च निष्कारणं घातं प्रत्यक्षं पश्यन्ती सा परं यवनान्द्वेष्टि. इदं सर्वं स्वकुलवृत्तं बालाय शिवराजाय निवेदयन्ती तत्पुरतो दुःखोद्रेकमसहमानाऽश्रूणि मुंचन्ती सा बालमपि शिवराजं दुर्मदयवनस्वभावज्ञमकरोत्.

अपिच–ये विशेषतः प्रकृत्यैव पापविमुखास्तेभ्यो दुर्बलपीडनं न रोचते. यदि तेषां पुरतः कश्चन बलोन्मत्तो दुर्बलं पीडयेत्, तदा ते स्वात्मानमेव पीडितं मन्यन्ते. यथा हि पीड्यमानः स्वप्राणानपि तृणीकृत्य तत्प्रतीकाराय प्रयतते तथैव तेऽपि. निसर्गत एव पापविमुखः शिवराजो यदा बलोन्मत्तैर्यवनैः पीडितान् विप्रान् वाऽऽर्यमहिला वाऽपश्यत्तदा तान् यवनेभ्यो रक्षितुं प्रावर्तत. तदानीमेव स्वस्य दुर्बलत्वेऽपि सत्यपक्षपातित्वं समस्येव मनोऽपि स्वाभिलषितप्रदं भविष्यतीति बुद्धिस्तस्मिन्नतन्त्यं विश्वासमजनयत्.

अन्यच्च–तत्कालस्थास्तथा विलासमग्ना यवनाधिपा यथेच्छं द्रव्यसंपादनार्थं प्रजा अपीडयन्. तेषां स्वैरवर्तनैः सार्वत्रोऽप्यत्रस्यन् हिन्दुसामान्यजनाः क्षत्रियश्रेष्ठाः! न ते यवना आर्यमहिलास्वपि दयामाचरन्. देवालयान् भूमिसात्कुर्वन्तो देवतानां मूर्तीर्भञ्जयन्तो बलादेव स्वमतगान् यवनान् व्यधुः. तेन दुःखिताः प्रजाजनाः सर्वत्र यथाशक्ति प्रतीकारमारभन्त. तत्रैव केचन माधवा नाम भूत्वा निभृतं लोकसंघान्निर्माय जागृतिं चक्रुः. वाचकाः! सर्वथा शिवराजसमये यवनत्रासनिवारणार्थमीश्वरं सर्वेऽपि प्रार्थयन्त. तेन धार्मिकी शिक्षा प्रायः सर्वत्रैव प्रावर्तत. एवंक्रमेण सर्वत्र प्रचलितायाः धार्मिकपरिस्थितेरवश्यमेव श्रीशिवराजस्य चेतसि परिणामः संवृत्तः. तत्रापि माता जिजादेवी श्रीशिवराजं प्रकृत्यैव सद्गुणशालिनं स्वभाग्यनिचयं मन्वाना तदीयं चेतो

दुर्वर्तनादिभिर्यथा दूषितं न भवेत् यथा च धार्मिकशिक्षणेन नीति-संस्कारान् धारयेत्तथैव प्रत्यहं सावधानेनाचरत. अतः शिवराजस्य धार्मिकशिक्षणे माता जिजादेव्येव गुरुर्नान्य इति सर्वेऽपि वदन्ति. श्रीरामदासस्वामिनस्तु तामेव नीतिमत्तां सदुपदेशनावर्धयन्निति न ते प्रथमगुरवः.

( ३ )

यथा हि सर्वेषां जनानां कृते धार्मिकं शिक्षणमावश्यकं तथैव व्यावहारिकमपि. ये खलु संसारे व्यवहरन्ति तेषां केवलेन धार्मिक-शिक्षणेन कार्यसिद्धिर्न भवति. यतः संसारो नाम विविधविचित्रचित्त-वृत्तीनां जनानां महत्स्थानम्. तत्र हि केचन सज्जनाः, केचन दुर्जनाः, केचन भीरवः, केचन चौरा, इति नानाविधाः प्राणिनो व्यवहरन्ति. तेषु च परानिष्टमकुर्वता स्वानिष्टं च परिहरता जनेन वस्तव्यमिति परं दुष्करं कर्म. एतदर्थं हि सज्जनेनापि व्यवहरता स्वयोगक्षेमायावश्यं व्यावहारिकं शिक्षणं ग्राह्यमेव. तच्च व्यावहारिकं शिक्षणं तत्तद्व्यवहा-रानुरोधेन भिन्नं भिन्नं भवति. यथा हि पाठशालासु पठतां विप्राणां शिक्षणं, तथैव न क्षत्रियाणां नापि वैश्यानां. श्रीशिवराजश्चापारवीर्यसंपन्नानां युद्धकलाकुशलानां क्षत्रियाणां सुप्रसिद्धे वंशे समुत्पन्न इति तदीयं व्यावहारिकं शिक्षणमपि क्षत्रियकुलयोग्यमेव बभूव.

यदा हि शहाजिराजाः स्वपुत्रं बालं शिवराजं दादोजिकोंडदेवाय वितीर्य पुण्यपत्तनं गन्तुं तमाज्ञापयत् तदाप्रभृत्येव स स्वामिभक्तः सेवकः श्रीशिवराजाय क्षत्रियोचितं शिक्षणं दातुमारभत. तत्र प्रथमतः सर्वेषां शस्त्राणां निक्षेपास्तथा परनिक्षिप्तेभ्यस्तेभ्यः स्वरक्षणं शिशिक्षे. शिवराजोऽपि वंशपरंपरासंपादितक्षात्रसंस्कारोऽचिरादेव तस्मिन् सर्वस्मिन्नपि कर्मणि अद्वितीयः कुशलो बभूव. प्रायस्तस्मिन् काले सर्वस्मिन् सह्याद्रिप्रदेशे शूरा एव महाराष्ट्रीया न्यवसन्. दक्षिणापथवर्तिषु महंमदीयराज्येषु प्रायेणैतत एव शूरा महाराष्ट्रीया आसन्. अतएव तेषां सेवका वा पुत्रा वा स्त्रियो वा सदैव शस्त्रग्रहेऽश्वारोहे वा कुशला एव. शिवराजश्च शिक्षितोऽचिरादेव तेषु सर्वेषु अद्वितीयो बभूव.

अथ स्वामिकार्यदक्षः श्रीदादाजीकोंडदेवो यदा स्वस्वामिपुत्रं क्षात्रविद्याकुशलमपश्यत्तदा राज्यपालनाख्यमपरं द्वितीयं शिक्षणं तस्मै दातुं प्रचक्रमे. वाचकाः ! यथा हि युद्धादिना शत्रुजय आवश्यकस्तथैव जिताया भूमेः पालनमपि. तच्च पालनं प्रजास्वास्थ्यमूलकं. प्रजास्वास्थ्यं च न्यायविधानेन दुष्टदमनेन शिष्टानुग्रहेण व्यवस्थितकरग्रहणेन संभवति नान्यथा. यो हि राजा यथेच्छवर्तनः कोशद्रव्यं व्ययीकृत्य पुनरपि द्रव्यलाभार्थं नानाविधान् करान् स्थापयति तस्य सर्वा प्रजा करदानत्रस्ता संभूयोत्थिताऽवश्यमेव तं राजानं राज्यात् प्रच्यावयति. तस्मात् प्रजाभ्यो गृहीतः करस्तासामेव कल्याणार्थं

व्ययीकरणीयो नान्यत्रेति राजनीतिविदो मन्यन्ते. प्रजाकल्याणमेव स्वकल्याणमिति राज्ञाऽवश्यं भावनीयं. यथा हि कुटुंबस्य पालकः स्वीयकुटुंबपोषणे सदैव तत्परो भवति, स्वं च तदभिन्नं मन्यते, तत्सुखदुःखे आत्मीये एव मनुते. तथैव राज्ञा प्रजासु भाव्यं. अस्तु. इदं च शिक्षणं दादोजिकोंडदेवेन श्रीशिवराजाय दत्तं. वाचकाः ? श्रीशहाजिराजस्य [illegible] विजापुराधिपतिना योऽयं देश-विभागः [illegible] सैन्यानां सव-ना[illegible] केवलं पर्वतवासिनां विरला ग्रामटिका एव. यदा च श्रीशहाजिराजेः स्वभूव्यवस्थार्थं स्थापितो दादोजिकोंडदेवस्तदा स [illegible] पालिता-नि क्षेत्राणि विस्तीर्य वन्यपशून् व्याघ्रादीन् [illegible]मास. तथैवान्यप्रदेशेभ्यः कृषीवलानाहूय भूमिं [illegible] सैव भूमिः परं फलप्रदाऽभूत्. दादोजिकोंडदेवः स्वप्रजानां रक्षणार्थं स्थाने स्थाने न्यायालयान् स्थापयामास. तेषु च स्थित्वा यदा दादोजिः स्वयं कार्यं [illegible] शिवराजं स्वसन्निधौ स्थापयित्वैव निर्णयमकरोत्. तेन च शिवराजो न्यायकर्मण्यपि कुशलोऽभूत्. दादोजीकोंडदेवस्तु प्रकृत्यैव कियान् न्यायी आसीदित्यत्र प्राचीनाः कथां कथयन्ति.

एकदा श्रीशिवराजेन समं दादोजी राजकीयान्युपवनानि द्रष्टुं जगाम. तत्र विविधानाम्रफलभरावनम्रान् सहकारान् पश्यन्

एकं पक्वं फलं जग्राह. अथ तस्मिन्नेव क्षणे स्वामिनियोगं विना तदीयं फलग्रहणमन्याय्यं मन्वानः स स्वकीयं हस्तं छेत्तुं सेवकमाज्ञापयामास. यदा च सेवकस्तथाकर्तुं नाङ्गीचक्रे तदाऽऽगत्यांऽऽगवस्त्रस्यैकं बाहुं रिक्तमेवास्थापयत्. ततः कतिपयवर्षैः कोशवितरणार्थं विजापुरनगरं गतः स स्वयं शहाजिराजेः पृष्टः सन् वृत्तं न्यवेदयत्. तन्निशम्य तदीयस्वामिभक्त्या तुष्टः श्रीशहाजिराजास्तस्मै बहु पारितोषिकं दत्वा सत्कारयामासुः. अस्तु. एवंविधात् परमस्वामिभक्तात्तस्मात् दादोजीकोंडदेवात् सर्वमेव व्यवहारोपयोगि राजशिक्षणं लब्ध्वा श्रीशिवराजः परमचतुरो बभूव. वाचकाः! धार्मिकशिक्षणेन सुसंस्कृते चेतसि व्यावहारिकं शिक्षणं तथा हृदयङ्गमत्वमभवदेन शिवराजो राजनीतिप्राविण्यमद्वितीयमलभत.

४

बान्धवाः! बहवो हि नीतिमन्तो व्यवहारकुशला अपि नरा न महान्ति कार्याणि कर्तुं प्रभवन्ति. तत्र च कारणं तेषां दृढोद्योगित्वाभाव एव. प्रायः साधारणा जनाः किंचित्कार्यमारभ्य विघ्नैः पराहतास्ततो विरमन्ति न पुनर्विघ्नप्रतिविधिगुणितोत्साहा महतोत्साहेन तदेव कार्यमारभन्ते. इह जगति विरलास्ते ये पुनः पुनर्विघ्नसंततया पराहता अपि अभग्नोत्साहा आरब्धं कार्यं समापयन्त्येव. अतएव "प्रारब्धमुत्तमजना न परित्यजन्ति" इतिवचनोक्तं तेषामेवोत्तमजनत्वं. ईदृशान्यत्र नर-

त्तानि जगति लोकोत्तराणि कार्याणि कुर्वन्ति. यद्यपि पूर्वोक्ते द्वे अपि शिक्षे महाफले परमावश्यके तथापि दृढोद्योगित्वं विना न ते स्वफलं दातुं शक्नुतः. यथा चात्युत्तमविन्यासमपि देवालयं शिखररहितं निष्फलं भवति तथैव दृढोद्योगकारित्वेन रहिते एतेअपि शिक्षे. सज्जनाः? संसारे खलु कस्याऽपि कार्यस्य सिद्धिर्विघ्नैर्विना न भवत्येव. यो हि सांसारिको जनः स स्वयमेव मरणप्रभृतिभिर्विघ्नैराक्रान्तस्तदा तदारब्धं कार्यं विघ्नैराक्रान्तमिति किमु वक्तव्यं. एवंस्थिते विघ्नपराभूत्या प्रारब्धकार्यान्निवर्तनं न पौरुषं प्रत्युत तान् विघ्नान् दूरीकृत्य प्रारब्धकार्यस्य समापन एव. अत्र च गुरुः पूर्वेतिहास एव. ये हि लोकोत्तराः पुरुषा जातास्तेषां चरित्राणि तथा कार्याणि चेतिहासे लिखितानि बालको यदा पठति तदा स्वपूर्वजानां लोकोत्तरकार्यविधाने कियन्तो विघ्नाः समागच्छन् कथं च ते तान्विघ्नानपोह्य समारब्धानि कार्याणि समापयन्निति सर्वं वृत्तं जानात्येव. तेन संजातधैर्यः स प्रारब्धे कार्ये सहसा विघ्नितेऽपि महता धैर्येण तत् समापयत्येव. वाचकाः? इदमेवेतिहासशिक्षणस्य फलं. शिवराजश्च महाभारतप्रभृतीनितिहासग्रंथान् पपाठैव. तथापि दृढोद्योगित्वे तु तदीयाः पितृचरणा एव गुरव इत्यत्र न संदेहलवोऽपि. तैः खलु निजामशाहीराज्यस्य पालनार्थं कथं प्रयतितं, कथं च दिल्लीश्वरेण समाक्रान्तेऽपि निजामशाहीराज्ये धैर्यमविहाय पुनरपि स्वतंत्रराज्यस्थापनार्थं प्रयत्नः कृतः, कथं च तस्मिन्नुद्यमे निष्फले पुनरपि विजापुराधीशमाश्रित्य कर्णाटकविभागे

महतोत्साहेन स्वतंत्रराज्यस्थापनार्थमुद्योगः कृत इति सर्वत्रेतिहासे प्रसिद्धमेव. इदं च सर्वं वृत्तं जानन्ती माता जिजादेवी शिवराजाय सर्वमकथयत्. अनेनैव कारणेन श्रीशिवराजोऽल्पबलोऽपि बलिष्ठैराक्रान्तसमस्तभारतवर्षैर्यवनचक्रवर्तिभिः समं युयुधे. लेभे च यशः. शिवराजस्य दृढोद्योगकारित्वे सन्ति बहूनि निदर्शनानि. यानि क्रमेणाग्रे स्फुटीभविष्यन्ति.

५

वाचकाः ? एतावत्कालपर्यन्तं निरूपितं सर्वमपि शिक्षणं बौद्धमेव नानुभवात्मकं. बौद्धं हि शिक्षणं सर्वव्यवहारनिदानमपि अनुभवात्मकशिक्षणेन विना कार्याय न समर्थं भवति. यो हि बौद्धं शिक्षणं लब्ध्वाऽऽत्मानं विद्वांसं मन्यमानोऽनुभवात्मकशिक्षणग्रहणे समुदास्ते स प्राप्ते प्रसंगे कर्तव्यमूढ एव भवति. तस्मात् सामान्यतो ज्ञानस्य कस्याऽपि विषयस्यानुभवात्मकं ज्ञानमेव कार्यकारीति सिद्धं. इदं च शिक्षणं श्रीशिवराजो यवनराजधानीनिवासाल्लेभे. यदा च बाल्ये शिवराजः स्वपितुः समीप उवास तदा निसर्गत एव तत्प्रज्ञः सर्वं युद्धसाधनसन्नाहं तथा सामदानभेदादीनां प्रयोगान् प्रत्यक्षमन्वभूत्. विजापुरनगरस्य राजधानीत्वात्तत्र कृत्स्ना एव सैन्यविभागा आसन्. श्रीशिवराजः प्रायः प्रतिदिनं ' सैन्यव्यूहः कथं क्रियते ! कथं च सादिमण्डलस्य कृते समीचीना अश्वा उत्पाद्यन्ते ? कथं च

पदातिविभागो युद्धशिक्षणं दत्वा पटुः क्रियते ! कथं स्फोटकद्रव्याणि उत्पाद्यन्ते ? कथं सेनाविभागानां भिन्नानि भिन्नानि शस्त्राणि विरच्यन्ते. कथं प्रवृत्ते दीर्घकालिके युद्धेऽखण्डानि धान्यागाराणि स्थाप्यन्ते ? कथं च दुर्गाणि निर्मीयन्ते ? कथं चाराः स्वस्वकर्मनिपुणा विधीयन्ते ? कथं च कोशाः संगृह्यन्ते ' इत्यादिकं सर्वमेव साक्षादपश्यत्. तेन स परं प्रवीणोऽभूत्. यथाहि श्रीशिवराज इदं युद्धशिक्षणं [illegible] सामादीनां चतुर्णामप्युपायानां प्रयोगज्ञानमपि. स [illegible] जगाम. तत्र च विविधा विरुद्धमतयो नाना [illegible] जना आसन्. ये खलु महत्वाकांक्षिणो जनास्तेऽन्यान् [illegible] क्षिपन्त्येव. तथा च ते कथं परस्परं सामादीनुपयुंजते, कथं गूढचारैः स्वद्वेषिणां वृत्तज्ञानार्थं प्रयतन्ते, कथं स्वस्वामिचित्तानुकूल्यार्थं जाग्रति, कथं च बलिष्ठानपि स्वशत्रून् युक्त्याऽतिवर्तन्ते, कथं संघीभूय कार्याणि कुर्वन्ति, कथं च स्वाभीष्टसिध्यै स्वजीवितमपि तृणीकुर्वन्ति, कथं स्वेष्टसाधने जागरूका भवन्तीति सर्वं भाविकार्योपयोगि शिक्षणं शिवराजो यवनराजधानीनिवासादेव लेभे.





# स्वराज्यस्थापनाकारणानि

१ निसर्गतः प्रदेशस्य दुर्गत्वम्.

२ यवनानां दुर्वृत्तैरसंतुष्टा बलिनः

३ पर्वतवासिजनानां निरतिशयं विश्वासपात्रत्वं.

४ यवनानां राज्येऽन्तःकलहाधिक्यम्.

५ मातुरुत्साहातिशयः

१

वाचकाः ? इह जगतीतले यानि खलु सामान्यानि वाऽसाधारणानि वा कार्याणि जायन्ते तेषां स्थूलानि वा सूक्ष्माणि वा कारणानि भवन्त्येव. नहि कारणं विना कस्याऽपि कार्यस्योत्पत्तिरस्तीति दृष्टचरं. तथाच या खलु महाराष्ट्रे स्वराज्यस्थापनाऽभूत्तस्याः कारणानि कानीति वयं विचारयामः. फलं चास्य विचारस्य तेषां ज्ञानमेव. अस्तु. यद्यपि पुरा निरूपिता परिस्थितिः कारणमत्र भवितुमर्हति तथापि सा यवनपीडात्मिका कृत्स्नेऽपि भारतवर्षे समा-

नैवासीत्. प्रत्युत यावद्धि आर्यावर्ते यवना दुर्वृत्ता आसंस्तावन्न महाराष्ट्रे. ये खलु दिल्लीश्वरप्रभृतयो यवना अजायन्त ते च साक्षादेव महंमदीयवंशजाः. महाराष्ट्रे तु ये खलु विजापुराधीशप्रमुखा यवनराजा आसंस्ते च सनातनधर्मानुयायिवंशजा बलादेव महंमदीयाः कृताः. ततएव च ते आर्यधर्मानुयायिभिः समं विवाहादिकमप्यकुर्वन्. योऽयं विजापुरराज्यस्य प्रथमः स्वामी 'युसफआदीलशहा' नामा, स खलु मुकुन्दरावनाम्नः शूरस्य महाराष्ट्रियस्य भगिनीं परिणीतवान्. तस्याश्च पुत्रः पितुः पश्चात् सिंहासनमलंचकार. एवमेव निंबाळकरोपनामा कश्चन महाराष्ट्रियो विजापुराधीशस्य भगिनीमुपयेमे. तात्पर्यमिदमेव–दक्षिणापथवासिनो यवनास्तथा तदधिपाश्च न सनातनधर्मं तदनुयायिनो वा तथाऽद्विषन् यथाऽर्यावर्तवासिनस्ते. आर्यावर्तवासिनो रजपूतकुलसंभवाः क्षत्रियास्तु दुर्दान्तानां दिल्लीश्वराणां त्रासात् स्वात्मजास्तेभ्यः समर्प्यात्मानं ररक्षुः. नैकाऽपि दिल्लीश्वरकन्यका केनाऽपि क्षत्रियेण परिणीता. तस्मादार्यावर्ते दक्षिणापथे च यवनवर्तनेषु भूयान् भेदः. एवंसत्यपि महाराष्ट्र एव स्वराज्यस्थापना कथमभूदिति किं न विचारार्हं ? अस्तु.

सज्जनाः ? अत्र च प्रथमं कारणं महाराष्ट्रस्य नैसर्गिकी रचनैव. कृत्स्नोऽपि महाराष्ट्रदेशो दुर्गमाभिः सह्याचलशिखरमालाभिः परिवेष्टितः, दुष्प्रवेशाभिः पातालं प्रविष्टाभिरिव दरीभिः समलंकृतः, प्रतिशिखरविराजमानैः स्वातंत्र्यदेवीनिवासभवनैरिव स्वातंत्र्यदेवी-

प्रदत्तैः शिरोभूषणैरिवागणितैर्दुर्गैः संकुलः, अपरिच्छिन्नवृक्षराजिपरिमण्डितैर्वनसमूहैः संकटितोऽप्यपि वर्तते. ये खलु प्रायः पर्वतवासिनो जनास्ते प्रकृत्यैव स्वातंत्र्यप्रिया इतीतिहासेष्वपि दृष्टचरं. महाराष्ट्रे च सह्यपर्वतमाश्रित्य परकीयशत्रुभ्य आत्मानं तद्वासिनोऽरक्षन्. ये खलु दिल्लीश्वरप्रभृतयोऽपारसैन्यसमन्विताास्ते महाराष्ट्रं जेतुं सर्वथा प्रयतमानाअपि न फलं लेभिरे इत्यत्राऽपि कारणं पूर्वोक्तमेव. ये च वंगमिथिलामध्यप्रदेशप्रभृतयो देशाः सन्ति तेषु तादृशदुर्गमपर्वता-भावाद्भूप्रदेशस्य समानतया शतघ्नीबलेन सर्वमपि जेतव्यभूविभागं भस्मसात्कुर्वन्तो यवनाधिपास्तांस्तान् प्रदेशानजयन्. स्वायत्तांश्चाकार्षुः. महाराष्ट्रे तु तादृशप्रचण्डशतघ्नीवाहकानां शकटानां दुष्प्रवेश्यतयाऽयं देशो बलिष्ठानामपि यवनाधिपानां दुर्जयोऽभवत्.

( २ )

वाचकाः? निरूपितमिदमेकं कारणं. अपरं च सर्वं भारतवर्षमाक्रम्य लब्धस्वास्थ्यानां यवनाधिपानां दुर्वृत्तैरसंतुष्टा बलिनः.सज्जनाः? केनचिन्मदान्धेन यावद्दीना एव पीड्यन्ते न बलिनस्तावद्य सा पीडा परिपचति. नापि तस्याः कोऽपि परिणामो भवति. परन्तु यदा दीनपीडयाऽलब्धदुःखः स बलिष्ठानपि तृणीकृत्य पीडयितुमिच्छति प्रयतते च तदा स सद्यएव स्वीयकर्मणः फलमश्नुते. अयमेव न्यायो यवनानां विषये. यवनाश्च प्रथमतः शनैः शनैर्लब्धप्रतिष्ठा

दीनान् ब्राम्हणान् पीडयन्तोऽचिराद्बलिष्ठान् क्षत्रियानपि पीडयितुमारभन्त. तेन सर्वे एव विमता अभवन्. महाभागाः ? प्रमत्ता यवनाः कथं बलिष्ठान् पीडयामासुरिति संक्षेपेण विचारयामः.

यवनाश्च भारतवर्षे कलहायमानान् क्षत्रियराजानलोक्य तेषामेकतमं पक्षमवलंब्यापरं पक्षमनाशयन्. ततश्च तमपि पक्षं नाशयित्वा कुटिलया राजनीत्या कृत्स्नमेव भारतवर्षमात्मसाच्चक्रुः. तथापि भारतवर्षे केचन क्षत्रिया राजस्थानवासिनः स्वातंत्र्येण स्वस्वविभागानपालयन्. तांश्च जेतुं दिल्लीश्वरा असकृत्प्रायतन्त. योऽयं प्रसिद्धोऽकबरनामा यवनाधिपोऽभूत् स द्वादशवर्षपर्यन्तं महाराजं मेवाडाधिपतिं श्रीप्रतापसिंहं जित्वा स्वसामन्तं कर्तुं प्रायतत. न लेभे च यशः. इयं खलु घोरा राज्यतृष्णा सर्वानपि बलिष्ठान् सरोषांश्चक्रे.

एवं स्वधर्मप्रसारं यवनाधिपाः खड्गसाहाय्येन चक्रुः. दिल्लीश्वरप्रभृतयो यवनभूपाला यान् प्रदेशानजयंस्तत्रत्यान् सर्वानपि सनातनधर्मानुयायिजनान् बलादेव महंमदीयान् व्यधुः. यथा हि मानवा मृत्युलोके पुत्रकलत्रादीन् बहु मन्यन्ते तथैव धर्ममपि. नहि कोऽपि स्वधर्मं समीचीनं मन्वानस्तं हातुमिच्छति. तथाच ते बलादेव महंमदीयधर्मं ग्राहिता आर्या यवनानद्विषन्.

किंच–अस्मिन्नार्यावर्ते बहूनार्यानेवावलोक्य तान् सर्वान् स्वधर्मानुयायिनो विधातुमक्षमास्तेऽन्यामेव युक्तिमयोजयन्. यो हि

यवनसाम्राज्यवासी अगृहीतराजधर्मा शूद्रो वा ब्राम्हणो वा स्यात्तेन प्रतिवर्षं नियतः करो राज्ञे देय इति. इमामलौकिकीं स्वधर्मप्रसारस्य युक्तिमवेक्ष्य प्रायः सर्वे एवार्या यवनानद्विषुः

एवमन्यदपि बलवत्तरं भारतवासिनां कारणमसंतोषस्य. तच्चेत्थं. प्रायः सर्वे एव यवनाधिपा यस्य कस्याऽपि जायां वा कन्यां वा यदा रूपवतीमपश्यंस्तदा तां विलासार्थं त ऐच्छन्. प्रतिषिद्धायां च तस्यामिच्छायां तां पूरयितुं महान्ति युद्धानि चक्रुः. इदं च स्वस्वामिनां परकान्ताप्रियत्वमवलोक्य सैनिकास्तथाऽधिकारिणश्च तथैवावर्तन्त. तेन प्रजाजना दुःखसागरमग्ना रुरुदुः. इमां च स्वकीयानां दुरवस्थामवलोक्य प्रबला अकुप्यन्. यवनाधिपानां च परकान्ताभिलाषं प्रबलेनाल्लाउद्दीनेन पद्मिन्यर्थे प्रवर्तितं घोरं युद्धं तथा तेनैव विहितं कर्णरायकान्तापहरणं सुतरां कथयति. अस्तु.

अपरं च सार्वभौमा दिल्लीश्वरप्रभृतयो यवनराजाः सत्यं बलाढ्या आसंस्तथापि सदैव तेऽन्तःपुरवासिनीनां राज्ञीनां कलहैरस्वस्थचित्ता एव ! यतस्तेषामन्तःपुरे विविधाः स्त्रियो व्यराजन्. संख्ययाऽपि च ताः सहस्रादपि अधिकाः. ताश्च यवनाधिपस्य चित्तं स्वानुकूलं विधातुं प्रयतमाना असूयान्विताः कलहांश्चक्रुः. सामन्ताश्च तासां पक्षपातिनो भूत्वा परस्परं. तेनापि यवनराज्ये स्वास्थ्यं नासीत्.

( ३ )

पाठकाः! महाराष्ट्रे स्वराज्यस्थापनाया यथा पूर्वोक्तं कारणद्वयं तथा तृतीयमपि सह्यपर्वतवासिनां जनानां निरतिशयविश्वासपात्रत्वमपि कारणमस्ति. यत्र हि स्वल्पलाभलुब्धा जनाः स्वामिनं तथा स्वमातृभूमिं भस्मसात्कुर्वन्ति तत्र नाशोऽस्ति स्वातंत्र्यस्य. स्वातंत्र्यदेवी तत्रैव तिष्ठति यत्र सर्वेऽपि जनाः परस्परं परमप्रीत्या विश्वासेन च वर्तन्ते. इदं च सह्यपर्वतवासिषु मावळजनेषु परमासीत्. यद्यपि ते दारिद्र्यपीडिता अधनग्ना एव, रात्रिंदिवं स्वोदरपूरणार्थं स्वक्षेत्रसंस्कारे मग्ना एव, तावताऽपि क्षुन्निवारणपर्याप्तमपि अन्नं दुर्लभमेव, तथापि तेषां शीलं क्षत्रियेभ्योऽन्यूनमासीत्. ते च यं पुरुषं स्वनायकममन्यन्त तदाज्ञां प्राणात्ययेऽपि नात्यक्राम्यन्. परकान्तासु मातृवद्वृत्तिः, परद्रव्येषु निरासक्तिः, गुणेषु आदरः, स्वाग्रेसराज्ञानुवर्तित्वं, इत्यादयो गुणाः प्राधान्येन तेष्वदृश्यन्त. अन्येऽपि च 'क्षुत्पिपासासहत्वं, शीतोष्णपर्जन्यवातसहनसामर्थ्यं,निरन्तरं वन्यपशुसांनिध्यतः प्राप्तं निर्भीकत्वं, शस्त्रोपयोगपाटवं, अंगीकृतकार्यनिर्वाहकत्वं, सदा गगनभेदिसह्याचलशिखरोल्लंघनेन शरीरसौष्ठवं, विलक्षणं शरसंधानकौशलं, इत्यादयः स्वातंत्र्यसंपादनरक्षणकारणीभूता गुणास्तेषु व्यराजन्त. किं च यथा हि यवनानामतिसांनिध्यत आर्यावर्तवासिन आर्या आर्यशीलाद्भ्रष्टास्तथा नेमे सह्याचलवासिनः. अस्मिन्

प्रदेशे तु तादृशोत्तमनगराभावादतीव विरला यवना आगच्छन्. तेन न ते स्वकीयां परम्पराममुंचन्. असत्यभाषित्वं हि राजनीतिपारगैः कर्तव्यत्वेन व्यपदिश्यते. यो हि भूयोभूयोऽसत्यं प्रलपन् स्वभावतः सरलान् जनान् वंचयति स 'राजनीतिचतुर' इति सन्माननीयेन शब्देन व्यपदिश्यते. सज्जनाः! यस्यां कस्यामप्यवस्थायामसत्यभाषित्वं नाम गर्ह्यमेव. यद्यपि क्षणमात्रं मिथ्यावादस्य शुभं फलं दृश्यते तथापि तद्भाविनोऽशुभात् फलादत्यल्पमिति न प्रामाणिकानां प्रवृत्त्यर्हं. लौकिका जना सकृद्वा द्विर्वा मिथ्याभाषणेन विप्रलभ्यन्ते परन्तु ततस्ते सत्यवचनेनाऽपि स्वानुकूलचित्ता विधातुमयोग्या भवन्ति. इमानेव मावळेजनानां गुणानवलोक्य श्रीशिवराजो महाराष्ट्रे स्वराज्यं स्थापयितुं प्रायतत.

## (४)

वाचकाः! यथेमानि कारणानि तथाऽन्यदप्येकं कारणमस्ति. तद्यथा- आर्यावर्तदक्षिणापथस्थापितानां भिन्नानां यवनराज्यानां परस्परं द्वेषाधिक्यं, तथा तत्तत्स्थाननियुक्तानां प्रधानाधिकारिणामन्तःकलहश्च. तथाहि- यदा खलु श्रीशिवराजो जिजादेव्या जज्ञे तदा तु आर्यावर्ते मोंगलकुलसंभवः शहाजहाननामा दिल्लीश्वरो राज्यमकरोत्. दक्षिणापथे च कुतुबशाहीआदिलशाहीनामभ्यां प्रसिद्धे द्वे राज्ये आस्ताम्. स च दिल्लीश्वर ऐश्वर्यशक्तिसंपन्नो दक्षिणापथवर्तिनी राज्ये आत्मसात्कर्तुमैच्छत्. तदधिपौ च तत्प्रतीकारमारभेतां, एवंस्थिते तौ

स्वभावत एव शूराणां महाराष्ट्रवासिनां साहाय्यमैच्छताम्. यदा हि मोंगलकुलसंभवो दिल्लीश्वरो विजापुरराज्यमात्मसात्कर्तुमाययौ तदा विजापुराधीशो विस्मृत्य प्राचीनं द्वेषं शिवराजं साहाय्यविधानाय प्रार्थयत. इमं च यवनराजानां परस्परं द्वेषमालोच्य शिवराजः 'यथैवैभिर्नः पूर्वजानां परस्परद्वेषं निमित्तीकृत्य सर्वेऽपि ते विनाशिताः स्वराज्यं च स्थापितं, तथैवास्माभिरपि एतेषां कलहायमानानां द्वेषं निमित्तीकृत्य कुतो न पूर्ववदेव स्वराज्यं स्थापनीयं' इति चिन्तयामास. अपिच–दिल्लीश्वरप्रभृतयः सर्वे एव यवनराजाः स्वज्येष्ठबन्धोर्वा पितुर्वा घातेन सिंहासनमलभन्तेति प्राचीनेतिहासेषु स्पष्टमेव. इमामेव रीतिं राज्यव्यवस्थार्थं स्थाने स्थाने नियुक्ताः सेवकाअपि शीघ्रमेवान्वसरन्. यदा हि कश्चन सेवको महति प्रान्ताधिपपदे नियुक्तः स शीघ्रमेव स तस्य प्रान्तस्य रक्षणाय स्थापितायाः सेनायाः साहाय्यं लब्ध्वा स्वतंत्रो भवितुमचेष्टत. दिल्लीश्वराअपि नीचजनसहायाः स्वामिभक्तानपि दण्डयामासुः. तेन सेवकाअपि स्वामिद्रोहिण एवासन्.

५

बान्धवाः ? यथामति मया महाराष्ट्रस्थानि स्वराज्यस्थापनाकारणानि निरूपितानि. परन्त्वेकं प्रधानं कारणमवशिष्टम्. तदिदं— यद्यपि बहवो जनाः किमपि लोकोत्तरं कार्यं कर्तुं वांच्छन्त्येव, तथापि तदीयाः संबंधिनो नानाविधैरुपायैस्तदुत्साहभंगं कुर्वन्तस्तस्मादुद्यमात्तं निवर्तयितुं प्रयतन्ते. इदं च बहुभिर्दृष्टं समनुभूतं च स्यात्.

परन्तु शिवराजस्य महाभाग्येन वा, कृत्स्नमहाराष्ट्रपुण्येन वा, दुर्मदान्धयवनहस्तपतितानां भ्रष्टपातिव्रत्यानां मृतानां वा सतीनां शापेन वा, माता जिजादेवी शिवराजस्य जनन्यभूत्. माता जिजादेवी नेतरस्त्रीवत् प्रकृत्यैवाबला किंतु धैर्यस्वनिर्वीरपत्नी वीरमाताऽप्यासीत्. सा तु स्वराज्यस्थापनार्थं शिवराजं तथा प्रोत्साहयति स्म यथा शिवराजः स्वमार्गप्राप्तां विघ्नततिमविगणयन् महान्तमुत्साहमबध्नात्. सज्जनाः ? दिल्लीश्वरप्रभृतयो यवनराजाः समस्तं भारतं समाक्रम्य लब्धप्रतिष्ठा अपारकोशसेनाबला ग्रीष्मभास्करा इव दुर्दर्शा आसन्. तदानीं तैः सह विरुध्य स्वराज्यस्थापनं नाम कियद्दुष्करमात्मनाशफलकमिति भवन्त एव विचारयन्तु. एवंस्थितेऽपि स्वकीयमेकाकिनं सुपुत्रं शिवराजमस्मिन् कर्मणि निःशंकं योजयन्ती माता जिजादेवी कथं न स्तुत्यर्हा. अतएव निरूपितेषु सर्वेषु स्वराज्यस्थापनाकारणेषु प्रधानं कारणं मातरं जिजादेवीमेवाहं मन्ये.





## सहायलाभः.

१ देशमुखानामैक्यवृद्धिः.

२ मावळेप्रमुखानांविश्वाससंपादनं.

३ स्वमंत्रिणोदादोजिकोंडदेवस्यानुकूल्यं.

४ धनसम्प्राप्तिः

( १ )

वाचकाः! शिवराजो विजापुरनगरान्निर्गतः पुण्यपत्तनं समागत्य तत्रैवोवास. स चानुभूतयवनराजशासनस्वरूप उद्विग्नमनाः सह्यपर्वतमण्डिते स्वपितृचरणसंपादिते भूविभागे स्वयं वीक्षणमिषेण पर्याटत्. प्रकृत्यैव सरलमतिः शिवराजो मध्यान्हकाले कस्मिन्नपि ग्रामे भोजनार्थं स्थितस्तत्रत्यैर्ग्राममुख्यैः समं संलपंस्तैः सहैव साधारणं किमपि अन्नं भुंजानः स्वस्मिंस्तेषां प्रीतिमुत्पादयामास. तेऽपि दारिद्र्यपीडिततया स्वामिपुत्रसत्कारेऽसमर्थाः स्वयमागत्य तेन संलापिता आत्मानं कृतकृत्यानमन्यन्त. शिवराजश्चाजन्म समवेषधारी सर्वत्र प्रचचार. कदाचिदतिदुर्गमदुर्गनिरीक्षणार्थं सेवकसहाय एकाकी ययौ. तस्य चेतसि राजपुत्रत्वदुरभिमानः पदमपि न लेभे. अनया समवृत्या शिवराजस्य यशः सर्वत्र प्रससार. सर्वेऽपि महा-

राष्ट्रियाः स्वनिवासं चरणधूलिक्षेपेण पावयितुं तं प्रार्थयन्त. सोऽपि तदीयामभ्यर्थनां स्वीकृत्य तन्निवासं गत्वा तान् संतोषयामास. एवं निखिलं सह्याचलं तथा तत्संबंधिनं भूविभागं पर्यटित्वा शिवराज इदमेव सर्वथा स्वराज्यस्थापनार्थं योग्यं स्थानमिति निरणयत्. निर्णीय चेत्थं जनसंग्रहं, मंत्रिसंग्रहं, धनसंग्रहं च चिकीर्षुः क्रमेण प्रावर्तत. शिवराजः स्वराज्यस्थापनार्थं यदा सह्यप्रान्ते पर्यटत्तदा स तत्र बहून् देशमुखानपश्यत्. इमे च देशमुखाः केवलं नियतं करद्रव्यं विजापुराधिपाय ददतः सर्वत्र यथेच्छमवर्तन्त. ते च स्वशक्तिमनुसृत्य सेनां स्थापयित्वा कमपि प्रदेशविशेषमाक्रम्य समानीतैर्द्रव्यै र्योगक्षेमं कुर्वन्तः सुखेनाजीवन्. एते च मानधनाः क्षुद्रेणाऽपि कारणेन परस्परमकलहायन्त. ततः प्रतिदिनं युद्धानि प्रावर्तन्त. शिवराजश्च तान् बलाढ्यान् स्वानुकूलान् विधातुं प्रयतमानस्तेषां वैराणि अशमयत्. भूयोभूयः स्वदेशस्य स्वधर्मस्य च दुरवस्थां तेभ्यो निवेद्य स्वराज्यस्थापनोद्यतमात्मानं साहाय्ययितुं विज्ञापयामास. तेऽपि च क्षत्रियकुलसंभूता महता सन्तोषेण स्ववैराणि त्यक्त्वा शिवराजं साहाय्ययितुं शपथं चक्रुः. सुप्रसिद्धप्रभुकुलसंभूतो नरेश्वरपुत्रो दादोजिनामा देशमुखः प्रथमत एव शिवराजं साहाय्ययितुमुद्यतो रोहिडेपर्वतवासिनो रोहिडेश्वरनाम्नः शंभोः पुरतः 'अहं चाजन्म त्वां स्वराज्यस्थापनार्थं साहाय्ययिष्यामि' इति शपथं चकार. विजापुराधिकृतेन तत्प्रान्ताधिपेन स्वयं विजापुराधीशेन च प्राणदण्डेन

तर्जितोऽपि न स स्ववचनं दूषयामास. एकदा तु केनापि सूचकेन निवेदितयवनाधिपकोपः स्वगृहं विहायारण्यमेवावसत्. एवं बह्वो देशमुखाः स्वसदाचारेण शिवराजेन वशीकृतास्तत्पक्ष्या अभवन्. ते च सेनादानेन द्रव्यवितरणेन च समये समये स्वयं समागत्य शिवराजं साहाय्ययामासुः.

( २ )

एवंरीत्या बलाढ्यान् देशमुखान् स्वानुकूलान्विधाय शिवराजः स्वयं चिन्तयामास. एते देशमुखाः स्वयं संपन्ना धनदानेन वा सैनिकदानेन वा साहाय्ययिष्यन्ति परन्तु ये खलु साक्षादेव युद्धे योत्स्यन्ते तेषामानुकूल्यं विनाऽशक्या स्वराज्यस्थापना. तस्मात्तेषामपि आनुकूल्यमत्यावश्यकमिति. विचार्य चैवं स दृढनिश्चयः शिवराजस्तस्मिन् प्रदेशे विख्यातानां क्षत्रियाणां वंशजैः समं गाढां मैत्रीं समपादयत्. तेषु च शिवराजस्य परं मित्राणि 'तानाजिमालुसरे एसाजिकंक, बाजीफसलकर, नामान्यासन्. एतान्येव त्रीणि मित्राणि पुरस्कृत्य परं शूराणां महाराष्ट्रियाणां मावळेजनानां महतीं सेनां विरचयामास. नैतावदेव किंत्वन्यानपि स्वानुकूलान्विधाय प्रसंगेऽसंख्यशूरजनलाभमपि भाविनं कल्पयामास.

**वाचकाः! एवं श्रीशिवराजेन प्रोत्साहिता मावळेजना निर्धूतकार्पण्या न केवलं शिवराजसमय एव विलक्षणान् पराक्रमांश्चक्रुः, किंतु**

यावत्कालं महाराष्ट्रे स्वराज्यमासीत्तावत्तदीया वंशजाः स्वपराक्रमैर्य-वनान् कातरान् व्यधुः. यथा च भगवता दाशरथिना वानराणां सेनां निर्माय बलाढ्यो रावणो हतस्तथैव दूरदर्शिना गुणपक्षपातिना श्रीशिवराजेन मावळेजनानां चमूं विधाय दिल्लीश्वरप्रभृतीन् समस्त-भारतवर्षस्वामिनो निर्जित्य महाराष्ट्रे स्वराज्यं स्थापितं. दिवंगते शिवराजे तस्य ज्येष्ठतनये संभाजिराजे व्यसननिमग्ने सर्वेषु च प्रधाना-मात्येषु प्रभोः क्रूरदण्डेन निर्विण्णेषु सत्सु कपटी दिल्लीश्वरोऽवरंगजेब-नामा महाराष्ट्रस्वराज्यं नाशयितुमाद्वादशवर्षं प्रायतत परन्तु भूयो-भूयो महाराष्ट्रियैः पराजितः पंचत्वमेव प्राप न स्वमनोरथसिद्धिं. बान्धवाः? अस्य प्रधानं कारणमिमे मावळेजना एव. ते च परमस्वा-मिभक्ताः स्वराज्यरक्षार्थं परं प्रयेतिरे.

( ३ )

एवं देशमुखानां तथा शूराणां मावळेजनानां साहाय्यं लब्ध्वा सन्तुष्टोऽपि स शिवराजः सर्वस्यास्य प्रारब्धस्य कार्यस्य सिद्धये आवश्यको धनव्ययः कथं कर्तव्य इति विचारयामास. यद्यपि शिवराजः स्वपैतृकधनसंचयात् प्राथमिकं धनव्ययं कर्तुं समर्थ आसीत्तथापि सर्वं व्यवहारं दादोजीकोंडदेव एवापश्यत्. स एव सर्वं व्यवस्थाप्यावशिष्टं कोशं शहाजिराजानां संनिधौ प्रैषयत्. चतुरः शिवराजस्तं दादोजीकोंडदेवं स्वानुकूलं विधातुं प्रयतमानोऽचिरादेव पूर्णं यशो लेभे. दादोजिकोंडदेवस्तु प्रथमतोऽनेनोद्यमेन स्वस्वामिनः

सर्वस्वनाशमुत्प्रेक्षमाणो नानुकूलोऽभवत्, परन्तु यथा यथा स शिवराजस्य गुणांस्तथा प्रतापानपश्यत्तथा तथा तदीयभाग्योदयं प्रति वीतसंशय आनुकूल्येनावर्तत. स च स्वामिभक्तः सेवको यदा रोगपीडितो जर्जरितकलेवरो मृत्युशय्यायां पपात तदा स समीपस्थं शिवराजं महता प्रेमातिशयेन जगाद—शिवराज! सम्प्रति अमी यवना अस्मान् परं तापयन्ति. प्रतिपदं धर्मनाशं तथाऽबलानां प्राणसमं पातिव्रत्यं गवां च प्राणानपहरन्तः परं पीडयन्ति. एतेषां नाशाय प्रयतनीयमेव. तथापि बलाढ्या इमे. अस्मदीयाश्च जना अद्यापि ऐक्यभावमनापन्नास्तत्सेवायामेवात्मानं सुखिनं मन्यन्ते. तेनैते त्वादृशमेकाकिनं तन्नाशाय प्रयतमानं शीघ्रमेव नाशयेयुः. भगवती जगदम्बा त्वां यशस्विनं विधाय महाराष्ट्रभूमिं स्वातंत्र्यसौभाग्यालंकृतां विदधातु. सर्वदा सावधानेन वर्तस्व. सर्वथा गोब्राम्हणान् प्रतिपालय इति. शिवराजोऽपि पितृसमस्य तस्य स्वामिभक्तस्य सेवकस्य वचोऽभिनंद्य तथैवावर्तत. प्राथमिकं धनव्ययं ततएव कुर्वाणः शिवराजो दादोजिकोंडदेवेन समये समये प्रतिबोधितोऽचिरादेव निभृतं सन्नाहमकरोत्.

(४)

एवं स्वल्पं धनं व्ययीकृत्य निभृतं विहितसन्नाहोऽपि शिवराजः प्रतिदिनमधिकं धनमपेक्षमाणः स्वमित्रैः समं कर्तव्यं चिन्तयामास. यतः शहाजिराजानां वार्षिकी धनप्राप्तिर्द्वादशलक्षपरिमिताऽ-

सीत. ततएव कृत्स्नं व्ययं कृत्वाऽवशिष्टं लक्षद्वयं शिवराजेन प्रारब्धेऽलौकिके कर्मणि कथं पर्याप्तं भवेत्. एवं चिन्तामग्नं शिवराजं तथा तदीयं मित्रमंडलमवलोक्य कश्चन देशमुखोऽवदत्–राजन्? इदं हि न आर्याणां भारतोद्धाररूपमावश्यकं कर्म. तस्मिन् कर्मणि तेन भारतेन कररूपेण दत्तं द्रव्यं कुतो न गृह्यते? नात्र पापस्य लेशः. यतो ये खलु यवनाधिपाः प्रजाभ्यः संपादितं करद्रव्यं यथेच्छमुपयुंजानाः परकान्तासंसर्गतत्पराः कृत्स्नां नो मातृभूमिं पारतंत्र्ये पातयन्ति ते पापभाजो भवेयुरथवा सनातनधर्मस्य गोब्राह्मणानां तथाऽर्यमहिलानां रक्षार्थं प्रयतमानाः केवलमस्य कार्यस्य सिद्धये द्रव्यमपेक्षमाणा वयं पापभाजो भवेमेति विद्वांस एव विदांकुर्वन्तु इति.

शिवराजस्तथा तदीयं मित्रमण्डलं तस्येदं देशमुखस्य भाषणं निशम्य सन्तुष्टं तथाकर्तुमन्वमोदत. अचिरादेव तस्मिन् प्रदेशे ये केचन विजापुराधीशेन नियुक्ता अधिकारिण आसन् तेषां कोशांस्तथा तैः प्रेषितांश्च तान् स्वसैनिकैः समाक्रम्यानयत्. तेन च पर्याप्तो धनलाभोऽजायत. वाचकाः! इदं शिवराजस्य कर्म गर्ह्यमिति केचन मन्यन्ते परन्तु सदसद्विवेकचतुराश्चेदं न्याय्यमेव वदन्ति. वस्तुतस्तु यदि भारवर्षाद्भारतवासिभ्य एव संपादितं द्रव्यं तेषामेव सुखार्थं प्रयुज्यते, तदा तत्रान्यायस्यावकाश एव न. नहीतः परोपकारात्मकं परं कार्यं विद्यते. अनाथानां रक्षणं यदि पुण्यं कर्म तदा तदर्थं संपादिता सामग्री कथं पापकारणं स्यात्? तस्माद्युक्तमेव समाचरितं शिवराजेन. अस्तु.

---



# ८ स्वराज्यस्थापनारंभः

१ दुर्गाक्रमणं

२ स्वकीयस्याऽपि विरोधिनः शासनं.

३ परकीयानामप्यनुकूलानां संग्रहः

४ व्यवस्थितसेनासन्नाहः

( १ )

अथ शिवराजः स्वराज्यस्थापनासामग्रीं संमीलितां वीक्ष्य त्वरया कार्यं विधातुमियेष. विलंबेन कार्याणि नश्यन्तीति राजनीतिरपि. स च सत्वरमेव सर्वं मित्रमण्डलमाहूय जगाद- सुहृदः ! इदानीं स्वराज्यस्थापनारंभस्तु कर्तव्य एव. यथा यथाऽस्माकं प्रयत्नो यशस्वी भवेत्तथा तथाऽधिका सामग्र्यपि समागमिष्यति. तत्र प्रथमतः स्वरक्षार्थं सह्याचलवर्तीनि दुर्गाणि स्वायत्तानि विधेयानि. तेन समये बलाढ्यैर्यवनाधिपैः समं योद्धुं वयं समर्था भविष्यामः. अस्माकमिमं प्रयत्नं स्वराज्यनाशकरं मत्वा विजापुराधीशोऽवश्यमेवास्मन्नाशार्थं बलाढ्यान्सेनापतीन् प्रेषयिष्यति. ततः स्वरक्षां विधाय तेषां पराजा

यार्थमिमानि दुर्गाण्यवश्यमुपकरिष्यन्ति. वयं च तेषु तेषु दुर्गेषु स्थित्वा तान् सेनापतीन् पराजेष्यामहे. यद्यपि अधुना वयं युध्वा कतिपयदुर्गाणि स्वायत्तीकर्तुं समर्था स्मस्तथापि यथाशक्ति भेदेनैव कार्यं करणीयमिति राजनीतिर्वदति. यवनैरपि भेदं विधायैव प्रायः सर्वं भारतवर्षं समाक्रान्तं. तद्यदीदं भवतां संमतं तदा शीघ्रमेव क्रमश इमानि दुर्गाणि जेतुं प्रयतिष्यामह इति. शिवराजस्येदं युक्तिसमन्वितं भाषणं समाकर्ण्य संतुष्टास्ते सत्वरमेव तथाकर्तुं विज्ञापयामासुः. महतोत्साहेन श्रीशिवराजः किं दुर्गमाक्रमितुमाज्ञापयतीति प्रतिपालयामासुः.

अचिरादेव श्रीशिवराजः पुण्यपत्तनात्पश्चिमोत्तरेण दशसु क्रोशेषु वर्तमानं तोरणाभिधं पर्वतदुर्गं पूर्वोक्तमित्रत्रयस्य साहाय्येन तदधिपं वशीकृत्य स्वाधीनं व्यधात्. सत्वरमेव तद्दुर्गं परिष्कारादिभिः संस्कृत्य शत्रोराक्रमणसहं विदधे. यदा च शिवराज एतद्दुर्गं संस्कर्तुं चखान तदा महान्तं भूमिगतं द्रव्यराशिमलभत. प्रकृत्यैव श्रद्धालुः तं द्रव्यराशिं स्वराज्यस्थापनार्थमेव भगवत्या जगदम्बया प्रदत्तं मन्यमानो महतोत्साहेन कार्याणि समारभत. तस्य सुहृदस्तथा सैनिकाश्च 'शिवराजेऽस्ति भगवत्याः कृपा, इति मन्वानास्तां द्रव्यलाभवार्तां सर्वत्र प्रसारयामासुः तेन सर्वत एव जनास्तत्साहाय्यार्थमागच्छन्. शिवराजश्च तोरणादुर्गं गृहीत्वा शीघ्रमेव तस्मात् पूर्वदक्षिणेन 'राजगड'नामकं नूतनमेव दुर्गं व्यरचयत्. ततश्च पुण्यपत्तनगामिनि मार्गे वर्तमानं चाकणदुर्गं स्वकार्योपयोगीति मत्वा तदधिपं

'फिरंगोजिनरसाळा'भिधं महाराष्ट्रियं स्वानुकूलं विधाय स्वायत्तीचक्रे. तथैव सिंहगडदुर्गाधिपं यवनं द्रव्येण वशीकृत्य तदपि बलाढ्यं दुर्गं हस्तगतमकरोत्.

वाचकाः? इत्थमनेकानि बलाढ्यानि दुर्गाणि केवलं भेदमवलंब्यैव श्रीशिवराजः स्वाधीनान्यकरोत्. अत्र च तदीयं राजनीतिचातुर्यं स्पष्टमालक्ष्यते. अस्मिन् समये शिवराजः केवलं विंशतिवर्ष एवासीत्. एतावत्यल्पे वयसि एतादृशलोकोत्तरकार्यविधानं न दैवीं कृपां विनेति तु सत्यं. अस्तु.

इत्थं बहूनि दुर्गाणि गृहीत्वा प्राप्तबलो भेदेनासाध्यानि दुर्गाणि तथा भूविभागांश्च बलेन जेतुमियेष. स च प्रथमतः पुण्यपत्तनस्य समीपस्थं कल्याणप्रान्तं स्वायत्तीकर्तुं मतिं चक्रे. यतस्तत्र दुर्भेद्यानि बहूनि दुर्गाणि आसन्. स च भूविभागो निजामशाहिराज्यनाशे कृतं साहाय्यं स्मरता दिल्लीश्वरेण विजापुराधीशाय प्रदत्तः. विजापुराधीशोऽपि तं परमबलाढ्यदुर्गरक्षितमत्युपयोगिनं मन्वानस्तस्य पालने परमस्वामिभक्तं शूरं 'अहंमद'नामानं यवनमेव नियोजयामास. तं च यवनं स्वामिभक्त्या विख्यातं भेदेन वा द्रव्येण वा वशीकर्तुमसमर्थः शिवराजोऽकस्माच्चारमुखेन तं कोशेन समं राजधानीं गच्छन्तं श्रुत्वा जवेन निर्गतो मार्गे एव तदीयं सैन्यमाक्रम्य सर्वं तं कोशं स्वनिवासं राजगडदुर्गमानयत्. कोशरक्षका यवनसैनिकास्तथा तदधिपश्च सोऽहंम-

दोऽकस्मादागतमिदं पराक्रमणं विलोक्य विस्मिता न प्रतिकर्तुं प्राभवन्. शिवराजश्चाविलंबेन सर्वं तं भूविभागं स्वायत्तं विधाय तत्रस्थानि सर्वाणि दुर्गाणि स्वकीयान्यकरोत्.

अथाचिरादेव श्रुतकीर्तयः कोंकणवासिनो जनाः शिवराजं 'कोंकणप्रान्तः समाक्रमणीयः, वयं च सर्वथा युष्मान् साहाय्ययिष्यामः' इति विज्ञापयामासुः. तदानीं ते च जंजिरानाम्नि सुप्रसिद्धे दुर्गे निवसता फत्तेखानशिद्धीनाम्ना यवनेन परं पीडिता आसन्. स च क्रूरकर्मा यवनः प्रतिदिनं ग्रामानाक्रम्य गृहाणि दग्ध्वा धनादिकमपहृत्य सपत्नीकान् पुरुषान् दासीकृत्यापणे व्यक्रीणात्. केषांचिद्देहेषु तप्तं तैलं निक्षिप्य तानदहत्. कांश्चित् पाषाणं गले बध्वा समुद्रे न्यमज्जयत्. प्रदीप्ततैलकटाहे कानपि न्यक्षिपत्. ईदृशैः क्रूरैः कर्मभिस्त्रस्तास्ते शिवराजं महतादरेण स्वरक्षणार्थं प्रार्थयामासुः. शिवराजोऽपि दीनरक्षणप्रधानकर्मा तेषामिमां विज्ञप्तिमाकर्ण्य कोंकणविभागमाक्राम्यत्. स्वायतीचक्रे चानेकानि दुर्गाणि सुसंपन्नैर्भूविभागैः समं. कृतकृत्यो महत्या श्रद्धया हरिहरेश्वरक्षेत्रं गत्वा भगवन्तं पार्वतीनाथं प्रणम्य भगवत्प्रसादमिव गोंवळकरसावंतनाम्ना केनापि पराक्रमशालिना पुरुषेणोपायनीकृतं सुप्रसिद्धं भवानीखड्गं लेभे. तं च खड्गं लब्ध्वा शिवराजः प्रतिदिनमाधिकमेव यशस्वी बभूव. भगवतीपूजासमये तं खड्गं पूजयंस्तं भवानीनाम्नैव व्यपादिशत्. इत्थं कोंकणविभागं स्ववशं विधायापारद्रव्यसंपन्नः स्वराजधानीमाययौ.

( २ )

दिवंगते दादोजीकोंडदेवे श्रीशहाजिराजसंपादितस्य भूविभागस्य व्यवस्थां स्वयं शिवराज एवापश्यत्. एकदा शहाजीराजानां सेवकान् द्रव्ययाचनार्थमागतान् 'अस्य भूविभागस्य करद्रव्यं व्यवस्थापनार्थमेव न पर्याप्तं. कथमपि वयमिमं विभागं पालयाम' इति कथयित्वा प्रतिप्रेषयामास. शहाजीराजाअपि श्रुतपुत्रकीर्तयः सन्तुष्टाः शिवराजकर्मणा क्रुद्धात् स्वाधिपातिकमपि अनिष्टमाशंकमानाः कर्णाटकविभागमगच्छन्. परन्तु शिवराजस्येदं कर्मानिष्टं मन्यमानाः केचन श्रीशहाजिराजसुहृदस्तत्रासंस्तेभ्य इदं नारोचत. तेषां च मुख्यः 'संभाजिमोहिते' नामा कश्चन श्रीशहाजिराजानां श्यालः शिवराजस्य सापत्नमातुभ्राता सुपेनाम्नि भूविभागेऽवसत्. स हि वार्षिकं करद्रव्यमदत्वा स्वतंत्रवद्वर्तत. आश्विकानां शतत्रयेण गर्वितः शिवराजं नागणयत्. तदीयमिदं वर्तनमवलोक्य क्रुद्धः शिवराजो मावळेजनसेनां गृहीत्वा एकस्मिन् मध्यरात्रे तमाक्रम्य पराजित्य सर्वं कोशं जग्राह. पराजितयाऽपि स्वमातुलं महतादरेण स्वसमीपे स्थातुं विज्ञप्त्यानंगीकुर्वन्तं तं प्रेमातिशयेन व्यसर्जयत्. इत्थं स्वमातुले निःपक्षपातं वर्तमानं शिवराजं सर्वे जना अस्तुवन्. ये च तटस्थास्तेऽपि ताटस्थ्यं विहाय शिवराजपक्ष्या भवितुमैच्छन्. ये च शत्रवस्ते मातुलशासनभीताः क्रमेण वैरमत्यजन्. युक्तं चैतत्! कथमन्यथा श्रीशिवराजस्य यशःशाश्वतमिह लोकेऽभविष्यत्. लोके हि साधारणा जनाः पुत्र-

मित्रमोहव्याकुलास्तथैव कर्माणि कुर्वन्ति. ये तु अलौकिकाः पुरुषास्ते विधूय पुत्रमित्रादीनां स्नेहं न्याय्यमेव समाचरन्ति. अस्मिञ्जननमरणक्रमवति संसारे को वा न मृतो न च जातस्तथापि तस्य यशो भवति यो न्याय्यं समाचरति. क्व सन्ति साम्प्रतं शिवराजसदृशा नरपुंगवास्तथापि तेषां यशस्तु सर्वत्र शोश्रूयत एव.

( ३ )

अथ सर्वतः प्रसृतां शारदज्योत्स्नासहचरीं श्रीशिवराजस्य कीर्तिं निशम्य विजापुराधीशेन स्वसेवातो निर्वासिताः सप्तशता यवनास्तं सेवितुमागच्छन्. अकस्मादागतांस्तान् यवनानवलोक्य विस्मितः शिवराजस्तान् स्वसेवायां स्थापयितुमनुत्सुक एवासीत्. युक्तमपीदं. यतो दिल्लीश्वरप्रभृतयो यवनाधिपाः कृत्स्नं भारतवर्षं समाक्रम्य स्थिता आर्याणामपेक्षया यवनानेव सुखेनापालयन्. महत्सु पदेषु तानेवोपायुंजन्. यवनांश्च महताऽऽदरेणावर्तयन्. तेन सर्वानपि स्वकीयान् बलाढ्यान्नृपान्विहाय मामेव किमर्थमिमे सेवितुमागता इति शिवराज आशंकत. प्रायः सर्वत्रैव यवनाः कौटिल्येन शत्रून् पराजयन्त. प्राथमिकाः क्षत्रियराजा धर्मेणैव युध्यमाना एभिर्यवनराजैर्लीलयैव पराजिताः. इदं च यवनानां कौटिल्यं जानन् स न कदापि तेषु व्यश्वसीत्. एतच्च स्वामिनोऽननुरूपं वर्तनमवलोक्य 'गोमाजीनाईकपानसंबळ' नामकं परमं मित्रं शिवराजं जगाद–स्वामिन्?

ये खलु त्वदीयं यशः श्रुत्वोदरभरणार्थं सेवेच्छया समागतास्तेषां निराकारणं न सम्यक्. वर्धिष्णुना राज्ञा सर्वजातीयाः प्रजाः स्वस्वधर्माचरणानुरोधेनानुगृह्य पालनीयाः. यद्यार्या एव संग्राह्या इति मनीषा तदा कथं समग्रं भारतसाम्राज्यं सिध्येत् ? किंच यदीमे यवन इति समुपेक्ष्यास्तदाऽत्यन्तमनुचितं. यथा हि यवनजातौ नीचा सन्ति. तथैवोदाराः कृतज्ञा अपि. यथा च सर्वेष्वपि मानवेषु कृतघ्ना कृतज्ञाश्च जनाः समुपलभ्यन्ते तथा महंमदीयेष्वपि. किं न सन्ति सहस्रशः कृतघ्नाः क्षत्रियाः? किं न 'रणदुल्लाखान'नामा यवन एव तत्रभवतां शहाजिराजानां परमः सुहृत्. तस्मादवश्यमिमे संग्राह्या. यो हि वर्धिष्णुस्तेन सावधानेन भाव्यं. अस्मासु च सावधानेषु न किंचिदत्याहितं भविष्यतीति.

इदं चोपयुक्तं वचनं निशम्य शिवराजस्तान् सर्वान् स्वसेवायां न्यधात्. तेऽपि कृतज्ञाः कार्याणि कुर्वन्तः ससुखमवसन्.

( ४ )

यथा यथा शिवराजः शत्रून्विजित्य दुर्गाणि भूविभागान् कोशांश्च स्वायत्तानकरोत्तथा तथा नानादेशेभ्यो गुणिजना वसन्ते प्रफुल्लं सहकारमिव भृंगाः सेवितुमाययुः. शिवराजोऽपि तान् सर्वानेव सत्कृत्य स्वसंनिधौ स्थापयामास. स च स्वराज्ये राजनीतिप्रवीणान् न्यायाधीशान् स्थापयित्वा प्रजाः पुत्रवदशात्. तेन सकलाअपि प्रजा-

जनाः सुखेन वर्तमानाः स्वकीयान् दुर्मदयवनपीडितान् स्वनिवासं त्यक्त्वा शिवराजराज्यं समागत्य वस्तुमकथयन्. तेऽपि विहाय यवनराज्यानि रामराज्यमिव सर्वथा सुखकरं शिवराजराज्यमागत्यावसन्. शिवराजश्च शुक्लपक्षेन्दोरिव वर्धमानस्य राज्यस्य पालनार्थं सेनासन्नाहं चिकीर्षुः प्रथमतः सर्वकार्यदक्षमेव मंत्रिणमन्वैषयत्. अचिरादेव सर्वराज्यकार्यधुरंधरं [illegible]चिटणीसनाम्ना महाराष्ट्रेतिहासे विख्यातं नरवरं [illegible]. तत्र वृत्तमित्थं. शिवराजो यदा कोंकणविभागमगच्छत्तदा तत्रत्यं राजापुरनगरमाक्रमितुं ससैन्यं ययौ. तदानीं बन्दीकृतान्जनसमुदायान् [illegible] आगत्य श्रीशिवराजचरणयोरपतत्. तत्र [illegible] स स्ववृत्तमित्थमकथयत्—नृपश्रेष्ठ? मम पितरः [illegible] चिरं तत्रैवावसन्. एकदा च [illegible] भ्रातृसहितं पितरं जघान. अस्मांश्च [illegible] मस्कतनाम्नि यवनप्रदेशे विक्रेतुं [illegible] पितृवियोगदुःखाकुला मात्रा समं [illegible] प्रार्थयाम. ततश्च मम माता धैर्य[illegible]कृत्यास्मिन् राजापुरग्राम एवामोचयत्. [illegible] राजधानीं न गन्तुं दत्तवचना इहैव [illegible]. ननु सकलभूपालशिरोमणे? यद्यस्ति कृपा[illegible] जनाः. अहं च वंशपरं-

[illegible]दीयं कुलं स्वामित्वेन [illegible] स्वराज्यवृद्ध्यर्थं यतिष्ये

इति. इदं च तस्य दीनं वचनमाकर्ण्य सन्तुष्टस्तदीयान् सर्वानपि भ्रातॄंस्तथा मातरं तेनापि समं स्वसेवायामस्थापयत्. अयमेव तरुणः सकलमहाराष्ट्रसाम्राज्यस्य प्रधानमंत्री बभूव. वाचकाः! केवलं मयाऽयं प्रधानराजपुरुषान्तर्गततया निर्दिष्टः. वस्तुतस्तु घोरपडे, शिर्के, सरनोबत, घाटगे, निंबाळकर, गुजर, पालकर, जगतापीत्यादिभ्यः सुप्रसिद्धेभ्यः क्षत्रियकुलेभ्योऽसंख्याः शूराः समागत्य शिवराजसेनायामुच्चानि पदान्यलंचक्रुः.

एवंरीत्या तांस्तान् राजकार्यचतुरान् पुरुषान् प्राप्य सन्तुष्टः शिवराजः स्वसेनां व्यवस्थितां कर्तुमियेष. आद्यावधि तु ये केचन महाराष्ट्रियास्तरुणाः स्वयमागतास्तांस्तथा शहाजीराजसंपादितस्य भूविभागस्य रक्षणार्थं येऽश्विका आसंस्तांश्च गृहीत्वा महता साहसेनोपरिलिखितानि शिवराजः कार्याणि चक्रे. इदानीं तु आक्रान्तप्रभूतदुर्गः सम्प्राप्तधनो लब्धभूपालनार्थं, तथा पुनर्नूतनभूसंपादनार्थं सेनावृद्धिमपेक्षमाणस्तामेव चक्रे. यद्यपि शास्त्रे सेनायाश्चत्वारि अंगानि कथितानि, तथापि पर्वतमये महाराष्ट्रे गजानां तथा रथानामनुपयोगं पश्यन् चतुरः शिवराजस्तीक्ष्णाग्रभल्लमण्डितानामाश्विकानां तथा खड्गधारिणां पदातीनामेव सैन्यं विरचयामास. सर्वस्मिन् भारतवर्षेतिहासे महाराष्ट्रियाणां भल्लक्षेपः सुप्रसिद्धोऽस्ति. तथैव धानुष्काणां शरसंधानं. धानुष्काश्च निभृतं वृक्षशाखासु

ीनास्तथा शरवृष्टिमकार्षुर्यथाऽज्ञातशरागमनस्थानाः शत्रवः कांदि-
ीका अभूवन्.

तत्र शिवराज एषां प्रत्येकं विभागं विधाय तत्र स्वामिभक्तं
शलमेकमधिकारिणं न्ययोजयत्. नेताजीपालकरनामानमतिशूरं महा-
ाष्ट्रियं वाजिदलस्य मुख्यमधिकारिणं चक्रे. तथैव येसाजीकंकनामकं
ालमित्रं शूरं मावळेमुख्यं पदातीनां मुख्यमधिकारिणं. गजशालायास्त-
ोष्ट्रशालायाः शतघ्नीविभागस्य चाधिकारिपदे शामराजरांझेकरनामानं
ातुरं पुरुषं न्ययुंक्त. सज्जनाः ? एवमल्पीयसा कालेन श्रीशिवराजः
वतंत्रराज इव सर्वैरधिकारिभिः स्वराज्यमपालयत् प्रतिदिनमवर्धयच्च.






1. विजापुराधीशस्य कापट्यम्.
2. शिवराजस्य मातृभूमिप्रीतिः
3. शहाजीराजानां कारागारवासः.
4. शिवराजस्य राजनीतिचातुर्यं.
5. कार्यसिद्धिः.

( १ )

एवं सर्वदा विजयमानं नानादुर्गसमाक्रमणेन बलाढ्यं शिवराजं समाकर्ण्य विजापुराधीशश्चिन्तातुरो मंत्रिभिः समं किं कर्तव्यमिति विचारयामास. मावळप्रान्तनियुक्ताः प्राय सर्व एवाधिकारिणः शिवराजतो भीताः स्वरक्षणार्थं तं प्रार्थयन्त. यदा तु कल्याणप्रान्ताधिपोऽहंमदः स्वयमागत्य कोशाक्रमणं तथा कृत्स्नस्य कल्याणप्रान्तस्य स्वायत्तीकरणमश्रावयत्तदा स शिवराजमनुपेक्षार्हं मेने. स च कपटी

प्रथमतः शिवराजसमारब्धे कार्ये शहाजिराजानां साहाय्यमाशंकमान-
स्तानेव स्वपुत्रस्य शासनार्थमाज्ञापयामास. शहाजीराजाश्च प्रकृत्यैव
सरलाः स्वयं विजापुराधीशाद्भयमाशंकमाना महता विनयेन तं विज्ञा-
पयामासुः. स्वामिन्! नास्ति मम कोऽपि संबंधः शिवराजेन. शिवरा-
जश्च यद्यपि मां पितरं मन्यते तथापि ममाज्ञां न शृणोति. तत्
स्वामिभिरेव यथेच्छं शासनीयः. तत्र न मे काऽपि क्षतिः. अथवाऽह-
मेव तच्छासने नियोजनीयः. अहं च सर्वथा तं शासिष्यामीति. निसर्गत
एव कपटमतिः स यवनराज इदं श्रीशहाजीराजानां स्वामिभक्तिमयं
भाषणं कल्पितं मिथ्या मन्यमानः सततं यवनराज्यसेवया
लब्धवार्धक्येषु परमस्वामिभक्तेषु श्रीशहाजीराजेषु कपटमाचरितुं मतिं
चक्रे. वाचकाः? स्वभावो दुष्परिहरः. ये खलास्तेषां बोधेन वा
दण्डेन वा न कोऽपि लाभः. निंबश्च सर्वथा प्रेम्णा सेवितोऽथवा
परशुना छिन्नः सर्वस्य कटुरेव सः. तस्मात् खलानां सेवा विपवद्धेया.
अस्तु. एवं विचिन्त्य स भूयो विचारयामास. कथं खलु शहाजीराजाः
प्रतिबन्धे स्थापनीयाः? यदि तान् बन्दीकर्तुं कश्चन सेनापतिः प्रेषणी-
यस्तदा तेऽपि शूरा बलाढ्या अवश्यमेव योत्स्यन्ते. प्रारब्धे च युद्धे
बहवो हि तत्पक्षपातिनः सामन्ताः स्वस्वसैन्यानि समादाय तान् साहा-
य्ययिष्यन्ति. तदा च महती हानिः. अथ शिवराजस्य शासने कश्चन
सेनापतिः प्रेष्यते चेत्तदा स यदाऽस्मत्सेनापतिं विजयेत तदा महद-
निष्टं. तदानीमेव शहाजीराजाः पुत्रप्रेम्णा समाकृष्टा यदि शिवराजं

साहाय्ययितुं व्रजिष्यन्ति तदा तु सुतरां राज्यस्य हानिरेव. तस्मात् कपटेन शहाजीराजाः समाहूय प्रतिबन्धे स्थापनीयाः. पितरं च प्रतिबन्धस्थं प्राणसंकटपतितं समवलोक्यावश्यमेव शिवराजः क्षमां याचितुमागमिष्यति. सर्वथाऽस्मिन्नर्थे कपटाचरणं विना न गत्यन्तरमिति. चिन्तयित्वा चैवं स कपटी विजापुराधीशः कर्णाटकाविभाग एव स्थितं बाजीघोरपडेनामकं स्वसामन्तं कपटेन श्रीशहाजीराजान् बन्दीकृत्य विजापुरनगरं प्रेषयितुं दूतद्वाराऽऽज्ञापयामास. सोऽपि राजशासनं शिरसा स्वीकृत्य शहाजीराजान् भोजनमिषेण समाहूय बन्दीचकार.

इत्थं स्वामिनियोगाद्बाजीघोरपडेसामन्तः सावधानेन श्रीशहाजीराजान् बन्दीकृत्य विजापुरनगरं प्रेषयामास. विजापुराधीशः स्वमनोरथं सफलमवेक्ष्य प्रमुदितस्तान् परं खिन्नान् शहाजीराजानवदत्. 'यदि त्वत्पुत्रः शीघ्रमेव क्षमां याचितुं नागमिष्यति तदा त्वं प्राणैर्वियोक्ष्यसे' इति.

परमसज्जनाः शहाजीराजास्तु स्वस्वामिन इदं निष्ठुरं वचो निशम्य क्रुद्धा अपि स्वामिमर्यादाभंगभिया स्वापमानं चोत्प्रेक्षमाणाः शान्तिमवलंब्य प्रत्यवोचन्. स्वामिन्! यदा मया निजामशाहीराज्यं दिल्लीश्वराद्रक्षितुं प्रायति तदैव यदि स्वतंत्रराज्यस्थापनेच्छा मेऽभविष्यत्तदा न तदशक्यमभविष्यत्. किंतु अस्मत्सजातीयेष्वेव कलहं पश्यता

मया स्वराज्यस्थापनाऽशक्येति निश्चितं. सोऽहं सर्वस्मिन्नपि निजामशाहीराज्ये दिल्लीश्वरेणाक्रान्ते युवा सन्नपि युष्मान् सेवितुमागतो नतु स्वातंत्रराज्यस्थापनायां निमग्नोऽभवम्. राजन्? इदमेव मदीयं वृत्तं पुत्रकृत्यानुकूल्याभावं द्योतयति. योऽहं शरीरसामर्थ्यशाल्यपि न स्वामिद्रोहमकार्षं सोऽहमधुना विगतोत्साहसंपत् कथं स्वामिद्रोहेणात्मानं दूषयिष्यामीति विचारशीलेन स्वामिनैव विचारणीयम् इति. एवं विज्ञप्यापि यवनराजस्य सन्तोषमपश्यन्तस्ते तत्समक्षमेवेदं पत्रं शिवराजायालिखन्.

चिरंजीव? शिवराज? तव कुकर्मभिः संतप्तो नः स्वामी अस्मान् कर्णाटकविभागादाहूय दूषयामास. आदिशच्च यदि ते पुत्रः सर्वाणि दुर्गाणि तथा भूविभागान् मह्यं समर्प्य क्षमां याचितुं शीघ्रमेव नागमिष्यति तदा महदनिष्टं भवेदिति. तस्माद्यदि मम प्राणाः प्रिया यदि वा कुलयशस्तदा त्वमवश्यं स्वामिचरणानां समीपमागत्य क्षमां याचिष्यसि इति.

(२)

शिवराजश्चेदृशं स्वहस्तलिखितं तातापादानां पत्रं वीक्ष्यात्यन्तं चिन्तातुरोऽभवत्. वाचकाः? अस्मिन् समये शिवराजस्य मानसं कामवस्थामलभतेति यूयमेव विचारयत? न खल्वतिकुशलस्याऽपि लेखकस्य लेखनी किंवा लघुहस्तस्य चित्रकारस्य चपलाऽपि तूलिका

लिखितुं दर्शयितुं च समर्थेति अहं मन्ये. इतः परमपवित्राः प्रातः- संस्मरणीयाः पूज्यास्तातपादाः, इतश्च रात्रिंदिवं प्रयत्नैः संपादितस्य शुभोदर्कस्य गोब्राह्मणरक्षार्थं स्थापितस्य स्वराज्यस्य बाल्य एव नाशः. इतो नैसर्गिकी पितृभक्तिः, इतोऽनिवार्या स्वदेशप्रीतिः, इतश्च पितृद्रोहपातकं, इतश्च मातृभूमिद्रोहपातकं. इतश्च पित्राज्ञापरिपालनपुण्यं, इतश्च सकलभारतमहिलापातिव्रत्यरक्षणपुण्यं. इतश्च निरतिशयस्वातंत्र्यलालसा, इतश्च तातानिष्टाशंका. इतश्च कुलदोषपातः, इतश्च कर्तव्यवैमुख्यदोषः. एवं दोलायमानचेताः कमपि एकं पक्षमवलंबितुमशक्नुवानः शिवराजः स्वमंत्रिमण्डलेन समं विचारयामास. परन्तु तेऽपि कर्तव्यविमूढा न किमपि निश्चित्य वक्तुं पारयांबभूवुः.

अथ किंकर्तव्यतामूढो दुःखव्याकुलः शिवराजः शयनागारं गत्वा शयनीये निपत्य विचारयामास. भगवन्? जानकीजाने? किं मां भूयोभूय ईदृशैर्दुःखराशिभिः संयोजयन् परीक्षसे? नाथ? यद्यपि तातचरणाः परं प्रियास्तथापि मातृभूमिः सर्वतो वंद्या. मातृभूमिं यवनाक्रान्तां भारतीयांश्च पशुवत् परकीयसेवामग्नान् महिलानां पातिव्रत्यस्य तथा गवां ब्राह्मणानां, विप्राणां धर्मस्य च नाशं पश्यन्नहं यथा दुःखी भवामि न तथाऽन्येन केनापि. अग्रिमा अस्मत्कुलसंभवाः शिवराजेन मातृभूम्युद्धारार्थं स्वतातचरणाः समुपेक्षिता इति वदेयुः.

न मे मातृभूसेवातो यशो वात्मा वा प्रियः. सत्यमिदं! तथापि भगवन्? यदि तातपादान् सुखेन मोचयिष्यासि तदा वरं. अहं चात्मव्ययेन तातपादान् मोचयितुमिच्छामीति.

एवं चिन्तापरे शोकमग्ने शिवराजे राज्ञी सखीदेवी मूर्ता विजयश्रीरिव शयनागारमाययौ. सा च म्लानं शिवराजस्य मुखारविन्दं बाष्पपूरिते लोचने च समवलोक्य चिन्तातुरा समीपं स्थित्वा लीलया चिन्ताकारणमपृच्छत्. सोऽपि सर्वं वृत्तं तस्यै न्यवेदयत्. तन्निशम्य खिन्ना देवी धैर्यमवलंब्य जगाद. नाथ? यद्यपि वयमबलाः, अस्माभिश्च राजनीतौ किमपि न वक्तव्यं, तथापि अहमत्र विषये किंचिद्वक्तुमिच्छामि. यदि योग्यं तदा ग्राह्यम्. यद्यपि श्वशुरचरणा महत्यामापदि मग्नाः. कदाचित् कुपितो विजापुराधीशस्तान् प्राणैरपि वियोजयिष्यति. तथाप्यस्माद्भयाद्युष्माभिः स्वराज्यस्थापनोद्यमान्न विरमणीयम्. प्रतिवर्षं वा प्रतिदिनं वा समग्रे भारते वर्षे जायमानानां गोहत्यानां पतिव्रताशीलहरणानां विप्रधर्मनाशानामपेक्षयाऽस्माकं वा श्वशुरचरणानां वा प्राणाः क्षुद्रा एव. परिवर्तिनि संसारे प्राणिनो जीवनं क्षणभंगुरमेव. तद्यदि पूज्यश्वशुरचरणानां प्राणव्ययेन सर्वेषां भारतीयानां प्राणा रक्ष्यन्ते तदा गच्छन्तु ते प्राणाः, लभन्तां च दुर्लभं चिरन्तनं यशो मदीयश्वशुरपादाः.

किंच–यदि यूयमेव स्वयं विजापुराधीशं शरणीकृत्य स्वराज्यस्थापनोद्योगं परित्यज्य जितानि दुर्गाणि तथा भूविभागान् मोक्ष्यथ

तदाऽपि स श्वशुरचरणान् मोक्ष्यतीति कथं श्रद्धेयं. प्रत्युताभयस्य तथा श्वशुरप्राणानां च याचनार्थं स्वयमागतान् युष्मानपि प्रतिबंधे स्थापयेत्. अथवा किमप्यनिष्टं कुर्यात्. इयं हि सर्पसमा यवनजातिर्न कदाऽपि विप्रलब्धा विश्वसनीया. किंवा बलिष्ठयोरनायासेन हस्तमागतयोर्युवयोरुभयोरपि अनिष्टं कुर्यात्. तस्मात् क्षमायाचनार्थं भवद्भिर्न गन्तव्यमेव. स्वराज्योद्योगाच्च न विरमणीयं. श्वशुरचरणानां प्राणास्तु युक्त्या रक्षणीया एव. अतःपरं दैवायत्तमिति. शिवराजश्च स्वमनोरथानुरूपं स्वपत्न्या भाषणं निशम्य शान्तचित्तः सुखेन सुप्तः प्रभाते मातरमभिवंद्य सर्वं वृत्तं निवेद्य कर्तव्यं पप्रच्छ. साऽपि वीरपत्नी वीरमाता तथैव जगाद. मातरमपि स्वानुकूलाभिप्रायामवलोक्य निश्चितकर्तव्यः शिवराजो मध्यान्हे तस्य पत्रस्य प्रत्युत्तरमित्थं लिलेख.

पूज्याः ? पितृचरणाः ? युष्माभिः प्रेषितं पत्रमवलोक्य नितान्तं खिन्नोऽस्मि. तत्रापि यैः स्वीयं जन्म स्वसेवायामेव व्ययीकृतं तेषां युष्माकं विषये विजापुराधीशस्येदृशीं वृत्तिमवेक्ष्य तु सुतरां. स्वकीयं लोकोत्तरं शौर्यं चातुर्यं च व्ययीकृत्य सेविता इमे यवनाः समय ईदृशं पारितोषिकं वितरन्तीति वीक्ष्याभिमा महाराष्ट्रियास्तरुणा यवनाधिपसेवातो निवर्तेरन्. स्वराज्यस्थापनायां च मां साहाय्ययेयुः. यथा हि पूज्यानां पितचरणानां युष्माकमाज्ञा प्रमाणं, तथैव गोब्राह्मणा-

नां च तथा मातृभूमेश्च. एवंविधाः प्रसंगाः प्रतिदिनं यवनराज्ये प्रजानामुपरि समापतन्ति. एतेषामेव निराकरणायाहं प्रयते. तत्र च मदीया वा पितृचरणानां वा प्राणा गमिष्यन्ति चेद्गच्छन्तु. यद्यपि ममापराधस्य कृते यूयं दण्डनीया इति विचित्रोऽयं न्यायस्तथापि यवनानां राज्ये न्यायस्यैवाभावादिदमेव युक्तं. तस्मान्मातृभूमेर्गो-ब्राह्मणादीनां च तथा भाविन आर्यसंतानस्य च शुभाकांक्षी अहं स्वराज्यस्थापनोद्यमान्न विरमामि. इदं पत्रं स्वस्वामिने प्रदर्श्यात्मा रक्षणीयः अन्यथा सर्वमेव भाग्यायत्तम्, इति.

वाचकाः ? किमेतत् पत्रमेव श्रीशिवराजस्यानुपमां मातृभूमि-प्रीतिं न दर्शयति ? क्व च सर्वथा पूज्यानां पितृपादानां जीवनाशंका? तामपि स्वीकृत्य स्वमातृभूमेः स्वातंत्र्यार्थं योऽविरतं प्रायतत तस्य शिवराजस्य स्वमातृभूमिप्रीतिः कथं वर्णनीया. बान्धवाः ? तत एवाद्यापि श्रीशिवराजस्य पवित्रं नामधेयं श्रुत्वा प्रमोदते मनः. आदरादृतं च चेतो भवति. अस्तु.

( ३ )

श्रीशहाजीराजाश्चेदं पत्रं स्वस्वामिने विजापुराधीशाय प्राद-र्शयन्. अवदंश्च—स्वामिन् ? यथा पुरा मयोक्तं तथैव सर्वं वृत्तं नवेति स्वामी स्वयं विचारयत्विति. स च प्रकृत्यैव कपटी यवनः

सर्वमेवेदं कृत्रिमं मन्यमानः सकोपं प्रत्युवाच–राजन्? सर्वमेवेदं युष्माकं वर्तनं कृत्रिमं. निःसंशयं शिवराजस्य निभृतं साहाय्यकारिणो यूयमेव. कथमन्यथा स्वामिकोपपात्रीभूतान् शिवराज उपेक्षेत. तस्मादद्य कारागारे युष्मान्निक्षिपामि. परन्तु यदि शीघ्रमेव त्वत्पुत्रः समागत्य क्षमां न याचिष्यति तदा निर्वातं तत्कारागारं विधाय त्वां यमागारातिथिं करिष्यामीति. उक्त्वा चेत्थं स दुरात्मा यवनाधिपः स्वसेवकांस्तान् शहाजिराजान् कारागारं नेतुमाज्ञापयामास. ते तु स्वभाग्यानि निन्दन्तो यवनसेवाप्रायश्चितमेवेदं शासनं मन्यमाना महता धैर्येण तैः सेवकैः समं कारागारं प्रति जग्मुः.

वाचकाः? नीचभूपालसेवाया इदं फलमिति सर्वैरवगन्तव्यम्. यथा हि बुभुक्षितो मांसिको मञ्जुलशब्दकारिणीं मनोहररूपां सारिकां लीलया निहत्य तन्मांसं भुंक्ते तथैव नीचाः सर्वथा परमस्वामिभक्त्या सेविताअपि काले प्रतीपा एव जायन्ते. सर्पश्च महता प्रेम्णा सेवितः. प्रतीदिनं पायितदुग्धोऽपि समये दशनेन प्राणानेव हरति. सैव रीतिर्नीचानां. तस्मात् कः सेवनीय इति विचार्य सेवकैः कश्चन सेवनीयः. वस्तुतस्तु अयं सेवकानामेव दोषः! ते हि यथा जात्यन्धा यत्रकुत्रचिद्गच्छन्तो गर्ते पतन्ति तथैव यं कमपि सेवमाना दुःखातिरेकं प्राप्य शोचन्ति. नीचानां तु नायं दोषः. यतस्ते नीचा एव. यथा ह्यग्नेर्दहनं स्वभावस्तथा नीचानामपि परापकार एव. अतोऽग्नेर्यथा निवर्तनमेव वरं तथा नीचेभ्यो निवृत्तिरेव श्रेयस्करी न संगतिः.

अस्तु. सर्वदुःखागारे कारागारे निवसन्तः श्रीशहाजिराजा अचिन्तयन्— अहो मे दौर्भाग्यम् ? मया हि निजामशाहीयवनराज्यस्य रक्षणार्थे यावन्तः परिश्रमाः कृतास्तावतः परिश्रमान्यद्यहं स्वतंत्रराज्यस्थापनार्थमकरिष्यम् तदाऽनायासेन तत्सिद्धमभविष्यत्. नष्टेऽपि तस्मिन् पुनरपि अमुं विजापुराधिपं सेवितुमागतः. अत्रापि कर्णाटकविभागे महान्ति युद्धानि युध्वा स्वबान्धवानां स्वातंत्र्यमपहृत्य तान् पारतंत्र्यनरकेऽपातयम्. सर्वस्याऽपि अस्य पापस्येदं फलं संवृत्तं. अस्तु. यशस्वी मम पुत्रः शिवराजः सर्वथा योग्यमेव करोति. मम हि पलिताशिरसो मृत्युना केशेषु गृहीतस्य दुःखेन किं ! यावद्धि आयुस्तावद्दुःखं तु भोक्तव्यमेव. अन्ते च यदि प्राणव्ययेन जनानां भारतवासिनां स्वातंत्र्येच्छा प्रवर्धेत तदा तदपि महत् फलमित्यत्र न संशयः. सर्वथेदानीं परमात्मनि विश्वस्य स्थातव्यमिति उचितमिति.

( ४ )

घोरे सर्वतो निबिडान्धकारव्याप्ते वातागमनार्थं स्थापिताल्पच्छिद्रे कारागारे क्रुद्धेन विजापुराधीशेन स्थापितान् स्वपितृचरणानाकर्ण्य पितृभक्तः शिवराजः परं चिन्तातुरोऽभवत्. माता जिजादेवी तु प्रकटं किमपि कर्तुमसमर्था हृदय एवासह्येन दुःखेन पीडिता पुटपाकावस्थामन्वभूत्. अथ शिवराजः स्वपितृचरणानां प्राणसंकटं समुपस्थितमवलोक्य विचारयामास. अस्मिन् समये

राजनीतिसमाचरणं विना नान्यच्छरणं. दुर्बलैर्मध्यमबलपीडितैः स्वपीडापरिहारायोत्तमबलवानाश्रणीय इति खलु राजनीतिः. स चोत्तमबलशाली विज्ञप्तो मध्यमबलं बलादेव ततो निवर्तयति. अस्मिन् समये सर्वेऽपि आर्यवंशजा दुर्बला एव. बलाढ्येषु सर्वेषु यवनराज्येषु दिल्लीश्वरः सत्यमेव श्रेष्ठः. स हि कृत्स्नमार्यावर्तं तथा हिमालयस्य परस्ताद्वर्तमानान् भूविभागान् शासत् कोशेन सैन्येन च सर्वानतिरिच्यते.

स चास्मिन् समये दक्षिणापथवर्तीनि यवनराज्यानि आक्रमितुमिच्छति. तद्यद्यस्मिन् समये स सेवकभावं प्रकटीकृत्य पितृचरणप्राणरक्षणार्थं प्रार्थ्यते चेत्तदाऽवश्यमेव विजापुराधीशमस्मान्नृशंसात्कर्मणो व्युपरमार्थमाज्ञापयेत्. यद्यपि विजापुराधिप आत्मानं स्वतंत्रं मन्यमानो दिल्लीश्वरं द्वेष्टि तथापि स मध्यमबलो दिल्लीश्वराद्बिभेति. तावतैवास्माकं कार्यसिद्धिः स्यात्. वस्तुतस्तु स्वतंत्रराज्यस्थापनार्थं प्रवृत्ता वयं न कस्यापि सेवकास्तथापि अस्मिन् समये विनयमवलंब्यैव कार्यसिद्धिः कर्तव्येति. विचार्य चेत्थं स चतुरः शिवराजो दिल्लीश्वरं पत्रद्वारेण स्वपितृचरणसंकटनिवारणार्थं विज्ञापयामास. तच्च पत्रं सारतो यथा. सर्वैश्वर्यसंपन्ना दिल्लीश्वराः! साम्प्रतं यूयमेव भारतवर्षस्य कृत्स्नस्य स्वामिनः. इमे च विजापुराधिपप्रभृतयो यवनाधिपा युष्मदधीनाएव. अहं च युष्माकं सेवको मदीयं पैतृकं भूविभागं परिपालयन् सुखेन निवसामि. मदीये भूविभागे बहून् राजद्रोहिणो वीक्ष्य तच्छासनार्थं तथा युष्मच्छासनस्थिरीकरणार्थं

त्र कानिचिद्दुर्गाणि संस्कृत्य स्वल्पां सेनां स्थापितवान्. तदेत-न्यथा मन्यमानो विजापुराधीशो मदीयं पितरं कारागारे स्थापयित्वा क्रूरेण प्राणदण्डेन दण्डयितुमिच्छति. सम्प्रति च मदीयेनानेन कर्मणा मम वृद्धः पिता कारागारेऽसह्यानि दुःखान्यनुभवति. तद्विज्ञापयामि युष्मान् यदि मदीयमिदं कर्मान्यथा न तदा मदीयं पितरं रक्षितुं विजापुराधीशमाज्ञापयतेति. अहं चावसरे स्मृत्वा कस्मिन्नपि कार्य-विशेषे योजनीय इति.

तदानीं च दिल्लीश्वरः शहाजहाननामा मोंगलकुलसंभूत एवा-सीत्. स हि सम्यग्ज्ञातश्रीशहाजिराजपराक्रमः शिवराजस्याऽपि परा-क्रमकृत्यानि शृण्वन् तावुभावपि स्वसेवकौ विधातुमुत्सुकोऽगीचकार श्रीशिवराजस्येमामभ्यर्थनां. आज्ञापयच्च दूतमुखेन विजापुराधीशं 'सर्वथा रक्षणीयः शहाजिराजः. इतरथा महदनिष्टं भवेत्' इति. तथैव महता संतोषेण पारितोषिकं वितीर्य शिवराजाय सर्वं वृत्तं निवेदया-मास च. विजापुराधीशस्तु राजनीतावपि अप्रतिहतं शिवराजस्य चातुर्यं वीक्ष्य मूढमतिः प्रबलस्य दिल्लीश्वरस्याज्ञामुल्लंघयितुमसमर्थः कथमपि शहाजिराजान् मोचयितुं कारागाराधिपमाज्ञापयितुं मनश्चक्रे.

वाचकाः! श्रीशिवराजो न केवलं शूर एवासीत् किंतु स राजनी-तिप्रवीणोऽपि. यद्यपि बहवः शूरास्तथाऽन्ये च राजनीतिपटवो लोके दृश्यन्ते परन्तु तदेतदुभयमपि यत्र संमीलितमास्ते तादृशो जनोऽ-

तीव दुर्लभः. अतएव श्रीशिवराजमद्वितियमेव मन्यन्ते सर्वेऽपि विद्वांसः. अस्मिन् समये शिवराजेन न केवलं पितृचरणा एव मोचिताः किन्तु विजापुरराज्याच्चतुर्थांशग्रहणाज्ञाऽपि तेन लब्धा. अस्तु.

( ५ )

एवं सार्वभौमकल्पस्य दिल्लीश्वरस्य नियोगं लब्ध्वा दुःखाकुलोऽपि अगतिकतया शीघ्रमेव शहाजिराजांस्तस्माद्यमागारादिव यातनागारा- न्निष्कासयितुं स्वामात्यमाज्ञापयामास. सोऽपि सत्वरमेव तथा चक्रे. प्रकृतिकुटिलो विजापुराधीशोऽन्तर्द्वेषेण ज्वलन् शहाजिराजान् स्वराज- धान्यामेव स्थातुमाज्ञापयत्. शहाजिराजाश्च ज्ञातयवनराजस्वभावाः स्वदेशं गन्तुमत्युत्सुका आसंस्तथापि पुनरनिष्टोद्भवशंकया तत्रैव तस्थुः. विजापुरस्थानि श्रीशहाजिराजस्य मित्राणि तान्निष्कारणं दण्डितानवलोक्य प्रथममेव दुःखाकुलानि पुत्रचातुर्येण मुक्तांस्तान् स्वदेशं गमयितुं प्रायतन्त.

अत्रान्तरे कर्णाटकविभागे राजद्रोहः समुदभवत्. स च दावा- नल इव वेगेन प्रसरन् सर्वमपि विजापुरराज्यं बाधितुं प्रारभत. ततो भीतो विजापुराधीशस्तस्य शान्तये स्वसामन्तानपृच्छत्. ते च तस्य शान्तये श्रीशहाजिराजा एव समर्था नान्य इत्यवदन्. अगत्या च सोऽनिच्छन्नपि कर्णाटकविभागं गन्तुं श्रीशहाजीराजाननुमुदे.

ास्मिन्नेव क्षणे मुमुक्षुर्मृत्युलोकमिव तद्यवनराजसांनिध्यं विहाय श्री- ाहाजिराजाः कर्णाटकविभागं यातुं कृतप्रस्थाना निभृतं दूतमुखेन शिवराज 'यदि त्वं मम सत्यमेव पुत्रस्तदाऽस्य मित्रद्रोहिणो घोरपडेकुलकलंकस्य बाजिसामन्तस्य प्राणानपहृत्य सन्तोषं जनय' इति समाज्ञापयन्.

श्रीशिवराजश्च मान्यानां तातपादानामिमामाज्ञां शिरसा स्वीकृत्य विजापुराधीशस्य कृपां तथा महदैश्वर्यं संपाद्य प्रत्यागतं विश्वासघातकं तं बाजिसामन्तं चारमुखेन विज्ञाय स्वसैनिकैः समं निर्गतः श्येन इव पक्षिणं रात्रावकस्मात् कण्ठे तं जीवग्राहं जग्राह. निवेद्य च तस्मै तदीयं पापकृत्यं तं स्वखड्गबलिं चक्रे. अन्यांश्च तत्सहायान् सर्वानपि जघान. सर्वं तदीयं कोशं च स्वराजधानीमानिनाय. अस्मिन् समये शिवराजः सहस्रादपि परं मानवानवधीत्.

वाचकाः! यद्यत्र केचन वदेयुः- बाजिसामन्तस्यात्र को वाऽपराधः? तेन खलु केवलं राजाज्ञा परिपालितेति तदा तान् प्रति वक्तव्यं, शिवराजस्यात्र कोऽवाऽपराधः? स तु केवलं पित्राज्ञां पालयामासेति. नहि राजाज्ञैव प्रमाणं न पित्राज्ञेति शास्त्राणि वदन्ति. एवं दूरीकृत्य

पितृसंकटं शिवराजश्चत्वारि वर्षाणि तूष्णींस्थित्वा गमयामास. अन्यथा पुनरुद्वेजितो विजापुराधिपस्तातचरणान् पीडयेदिति. अथ च स्वयं स्वीकृतसेवकभावः स दिल्लीश्वरराज्येऽपि न किंचित्कर्तुं पारयामास. एतेषु चतुर्षु वर्षेषु शिवराजः संपादितमेव भूविभागं सम्यग्व्यवस्थापयांचक्रे. विजापुराधीशोऽपि शिवराजं शौर्यचातुर्यसमन्वितं समवलोक्य भीतो नाकलहायत.





## (१० विजापुराधिपतिना समं संग्रामाः)

१ चन्द्ररावमोरेसामन्तस्य शासनं.

२ अफझुलखानवधः.

३ शिद्दीजोहारसेनापतेर्युक्त्यापराजयः

४ विजापुराधीशस्य स्वयमागमनम्.

५ फलाभावः संधिः स्वातंत्र्यप्राप्तिः.

### (१)

एवं युक्त्या पितृसंकटं निवार्य तदाज्ञां च समनुष्ठाय कृतस्वराज्यव्यवस्थः शिवराजः पुनरपि स्वराज्यमर्यादां वर्धयितुमियेष. अत्रान्तरे दिल्लीश्वरः शहाजहानः केनापि कारणेन क्रुद्धः स्वपुत्रं 'अवरंगजेब' नामानं विजापुरराज्याक्रमणाय महता सैन्येन समं प्रेषयामास. तदिदं वृत्तमाकर्ण्य राजनीतिचतुरः शिवराजः स्वसामर्थ्यवर्धनस्यायमेव समय इति मनसिकृत्वा दिल्लीश्वरं 'यदि विजापुरराज्यान्तर्गतं सर्वं कोंकणविभागं मह्यं दास्यथ तदाऽहं विजापुरराज्याक्रमणे युष्मान् साहाय्ययिष्यामि' इति विज्ञापयामास. दिल्लीश्वरोऽपि शिवराजस्य बलं समुद्रवेलेव वर्धमानमश्रेयस्करं मन्यमानस्तदीयां

विज्ञप्तिं नांगीचकार. शिवराजश्च तेन निभृतं कुपितः सर्वे यवनाः समाना इति दृढं मनसि कुर्वाणो यथेच्छं 'जुन्नर, अहंमदनगर'-नामनी नगरे दिल्लीश्वरराज्यान्तर्गते विलुण्ठ्य विपुलां सम्पदमाजहार. विजापुराधिपराज्यान्तर्गतं महाविभागमाक्रम्य प्रभूतं धनमाहृत्य स्वसेनां वर्धयामास. अत्रान्तरेऽकस्माद्विजापुराधीशो दिल्लीश्वरेण समं संधिमकरोत्. तेन शिवराजः पुनरपि विनयमवलंब्य दिल्लीश्वरं स्वापराधक्षमार्थमयाचत. सोऽपि आर्यावर्ते समुपस्थितं राजद्रोहं शमयितुं त्वरया गच्छन्न चकार मनसि शिवराजकर्माणि.

दिल्लीश्वरमार्यावर्तव्यवस्थामग्नमवलोक्य विजापुराधीशः प्रथमं शिवराजमुन्मूलयितुं मनो विदधे. यतो दिल्लीश्वरः शिवाजिना समं मिलित्वा मदीयं राज्यं लीलया स्वायत्तीकरिष्यतीति स परं संदिग्धे.

अथास्मिन् कर्मणि बाजिशामराजनामा कश्चन राजपुरुषो विजापुराधीशेन नियुक्तो निभृतं शिवराजं बन्दीकर्तुमिच्छन् चन्द्र-रावमोरेनाम्ना जावळीविभागस्वामिना विजापुराधीशसामन्तेन सह संमंत्र्य तस्मिन् प्रदेशे कृतवसतिः शिवराजागमनं प्रतिपालयामास. तदानीं शिवराजो महाडविभाग आसीत्. स चेमं वृत्तान्तं सर्वतः संचरतां स्वचाराणां मुखान्निशम्याऽकस्मात् स्वयमेवागत्य तं बाजि-शामराजं श्येनः शशमिव समाक्रम्य जिगाय. स तु तथापराभूतः कथमपि स्वप्राणान् गृहीत्वा राजधानीं ययौ.

एवं विजयं लब्ध्वा शिवराजो मनस्यकरोत्–अनेन खलु अस्मत्सजातीयेन जावळीस्वामिना चन्द्ररावेण मदीयः शत्रुरानीतः! अयं च भूयोभूयः कर्तव्यं बोधितोऽपि न तत् स्वीकुरुते. अस्य शासनं विना कृत्स्नोऽपि सह्याचलविभागः स्थिरो न भवेत्. तस्मादयं पुनरपि एकदा बोधनीयः. यदि अनुकूलो भवेत्तदा वरमेव. अन्यथा राजनीतिमनुसृत्य वर्तनीयमिति. विचार्य चैवं स शिवराजः स्वस्य विश्वासनिधीभूतौ द्वौ सेवकावाहूय जगाद–युवामितो गत्वा तं चन्द्ररावं पश्यतम्. मार्गे च केनचित्पृष्टौ शिवराजस्य कृते चन्द्ररावस्य कन्यां याचितुं गच्छाव इति वदतम्. तत्र च गत्वा स यथा मत्पक्ष्यः स्यात्तथा प्रायतेथाम्. अथ यदि स तथाभवितुं नांगीकुर्यात्तदा निभृतं तमाक्रम्य हतम्. अहं च ससैन्यं समीप एव तिष्ठन् युवाभ्यां सावधानेन द्रष्टव्य इति. तौ च तदाज्ञां स्वीकृत्य निर्गतौ मार्गे तथैव वर्तमानौ निर्विघ्नं जावळीग्रामं गत्वा तस्य चन्द्ररावस्य प्रासादेऽतिष्ठताम्.

अथ यदा भूयोभूयस्ताभ्यां बोधितोऽपि स चन्द्ररावः स्वाग्रहं नामुंचत्तदा तौ निभृतमेकान्ते च्छुरिकया तं प्रहृत्य महता जवेन समीपस्थं ससैन्यं शिवराजममीलताम्. शिवराजश्च तदानीमेव जावळीग्राममाक्रम्य योध्दुं प्रारभत. तस्य चन्द्ररावस्य हणमंतरावनामा मंत्री स्वामिपुत्रसमेतश्चिरं युयुधे, परन्तु शीघ्रमेव शिवराजस्तं हतवीर्यं व्यधात्.

एवमेवान्यो बांदलनामा देशमुख आत्मानं विजापुराधिपसेवकं मन्यमानः शिवराजायादुह्यत्. तमपि अनेनैव विधिना नामशेषं विधाय प्रकटीकृतालौकिकस्वामिभक्तिं नररत्नं वीरशिरोमणिं प्रभुकुलभूषणं तदीयममात्यं बाजिप्रभुं स्ववशं व्यधात्. इत्थं कृत्स्नं कोंकणविभागं स्ववशं विधाय बलं वर्धयामास.

( २ )

विजापुराधीशश्च क्रमेण प्रबलीभवन्तं शिवराजमाकर्ण्य चिन्तातुरस्तस्य शासने कृत्स्नं स्वबलमुपयोक्तुं कृतनिश्चयो महतीं स्वसामन्तानां सभामकरोत्. मुख्यस्य सिंहासनाधीश्वरस्य बालत्वेन तदीया मातैव कृत्स्नं राज्यकार्यमपश्यत्. सा तु शिवराजस्य प्रतापकृत्यानि श्रुत्वा नितान्तं क्रुद्धा सर्पिणीव सर्वान् राजपुरुषानुद्दिश्येदमभाषत-

सभ्याः ? राजपुरुषाः ? स राजद्रोही शहाजिराजस्य पुत्र शिवाजिः स्ववंशपरंपराप्राप्तां राज्यनिष्ठां त्यक्त्वाऽहर्निशं राज्यमस्माकं पीडयति. स्वपितरमपि न मन्यते. अस्माभिश्च प्रेषितान् सेनापतीन् विजित्य सांप्रतं बलिष्ठः संवृत्तोऽस्मत्प्रजा लुण्ठति. अधुना च तमुपेक्षानर्हं मन्यमाना वयं तं नामशेषं विधातुमिच्छामः. तत् को वा तं जीवग्राहं गृहीत्वा वा हत्वा वा राज्यपीडां दूरीकर्तुमिच्छति? अहं च सर्वथा तं साहाय्ययिष्यामीति.

समाकर्ण्य चेदं कोपपरीतमानसाया राजमातुः कठोरं भाषणं सर्वे तत्रत्या राजपुरुषाः शूराअपि शिवराजप्रतापश्रवणभीता नोत्ति-

न्त. अमन्यन्त च मनसि—किमर्थं पुरोभूयापयशो ग्राह्यमिति.
वं स्तब्धीभूतेषु सर्वेषु आर्यकुलजेषु प्रधानराजपुरुषेषु अफझुलखा-
नामा कश्चन नीचकुलोत्पन्नो यवन उत्थाय यथानियमं प्रणिपत्य
िंहासनं महता गर्वेण बभाषे. राजमातः ? इमे खलु सर्वेऽपि
नातनधर्मानुयायिनस्तं राजद्रोहिणं शिवाजिं निभृतं साहाय्ययन्ति.
द्यावधि ये खलु तस्य शासनार्थमस्मत्सेनापतयः प्रेषिताः प्रायस्ते
र्वेऽप्यार्याः. अतएव ते यशस्विनो नाभवन्. अन्यथा प्रबलं विजा-
रराज्यं क्व, क्व च मूषकइव सह्याचलमध्यवासी हीनबलः
ावाजिः. एषां च सनातनधर्मानुयायिनां महती श्रद्धाऽस्ति यत्
ावाजिः पुनरपि सर्वाणि यवनराज्यानि नाशयित्वा स्वराज्यं
ापयिष्यतीति. मूढा एवेमे ! आसेतोराचहिमाचलात् प्रवृद्धानि
वनराज्यानि नाशयित्वा कतिपयपर्वतीयजनसहायः शिवाजिः
राज्यं स्थापयेदिति को मतिमान् श्रद्दध्यात् ? यद्येतदपि श्रद्धा-
नूनं खद्योतोऽपि सूर्यं नामशेषीकृत्य स्वप्रकाशेन जगत् प्रकाशयेत् .?
रन्मेघोऽपि वर्षाघनावलिं परिभाव्य वर्षेत्. किंबहुना—अन्धोऽपि
थं लिखेत् ? एतदपि श्रद्धार्हं भविष्यति. यद्येतादृशदीनपीडया
तिपयग्रामलुण्ठनेन वा विश्वस्तजनवधेन वा सनातनधर्मोद्धारस्तथा
राज्यस्थापना चाभविष्यत्तदा चौरैरपि साऽकरिष्यत्. न खलु
ातीतले चौरैः स्थापितमेकमपि राज्यं दृश्यते. राजमातः ? किमहं
ीमि. एते हि निसर्गत एव परस्परद्रोहिणः परकीयानां दासा
 भवितुं योग्याः. एतेषां स्वराज्ये सत्यपि ये तत् पालयितुं न

प्राभवंस्त एव नूतनं स्वराज्यं स्थापयित्वा तत् सम्यग्वर्धयिष्यतीति का प्रत्याशा. परमात्मकृपयाऽद्यपर्यन्तं यवना एव प्रबला अग्रेऽपि तेषामेव साम्राज्यं यावच्चन्द्रदिवाकरं स्थास्यति. शिवराजसदृशाः कतिपये क्षुद्राः साम्राज्यद्रोहाग्निमुपासमाना अवश्य शलभगतिं लप्स्यन्ते. तद्यदि मामाज्ञापयसि तदाऽनायासेन तं पर्वतवासिनमाखुं बिडाल इव जीवन्तं गृहीत्वाऽत्रानेष्यामि. इति.

राजमाता तथा सर्वे महंमदीया राजपुरुषा अनेन तस्य भाषणेनोत्साहमयेन सन्तुष्टास्तमस्तुवन्. महाराष्ट्रियाश्चानेनापमानेनान्तर्ज्वलन्तोऽग्निगर्भाः पर्वता इव तूष्णीमतिष्ठन्. अथ राजमाता राजहस्तेन तमफझुलखानं बलिपशुमिव रत्नादिभिः सन्मानैरादृत्य द्वादशसहस्रसंख्याकमाश्विकबलं प्रभूतं पदातिबलं महतीः शतघ्नी स्तथा गजबलमुष्ट्रबलं च वितीर्य धनराशिपूर्णान् कोशानपि दत्वा शिवराजशासनाय गन्तुमन्वमोदत. स तु दुर्मदो यवनोऽनेन सत्कारातिशयेनात्मानं धन्यंमन्यमानः समानीतमेव शिवराजं भावयन् महतोत्साहेन विजापुरनगरात् प्रतस्थे. यद्यपि विजापुराधीश : प्रायो यवनमयं सैन्यं प्रचुरमदात्तथापि स भूयो महाराष्ट्रियसैनिकानां सहस्रद्वयं स्वसेनायां स्थापयामास. मेने च महाराष्ट्रैः समं योद्धुं महाराष्ट्रिया एव वरमिति. परन्तु द्रव्येण क्रीतानां तथा स्वयं स्वधर्माभिमानेन समागतानां सैनिकानां महदन्तरं न मनसि चकार. अस्तु.

अथ क्रमेण शिवराजराज्यमभिलक्ष्यागच्छन् स पापमतिर-
फझुलखानः कृष्णानदीमवततार. मार्गे च देवालयान्विध्वंसयन्,
आर्यमहिला बलादेव पातिव्रत्यव्रताद् भ्रंशयन्, गाश्च घातयन्, यवन-
स्वभावं प्रकटीचकार. तत्रैव तुळजापुरक्षेत्रवासिनीं श्रीभगवतीं
शिवराजस्य कुलदैवतं समाकर्ण्य कुपितस्तस्या मन्दिरं भूमिसात्कृत्य
तत्र स्वधर्मोपासनामंदिरं विधाय प्रामवर्धीत्. वाचकाः! एवंविधानि
तस्य मानवराक्षसस्य कर्माणि निशम्य सर्वेऽपि तन्मार्गग्रामवर्तिनो
जनाः स्वगृहाणि विहाय वनमध्यवसन्. परमात्मानमस्य दैत्यस्य
वधाय प्रार्थयामासुश्च. एवं सर्वतः स्वस्वभावं प्रकटीकुर्वन् मार्गे
वर्तमानं शिवराजराज्यप्रदेशं भस्मसात्कुर्वन् क्रमेण पुण्यपत्तनमागत्य
तत्रैव निवासमकल्पयत्.

शिवराजश्च सर्वत्र संचारिणां स्वचाराणां द्वारा विदितत‌दागमन-
तन्मनोरथमपि जानन् मनस्यकरोत्. यद्यपि अयं प्रयत्नोऽस्य सेना
च बलवती, तथापि विग्रहानुकूलं क्षणं न पश्यामि. यो हि अस्मान्
हन्तुं वा बध्वा नेतुं चेच्छति तेन सह संधिः कथं? जात्या यवनो
ह्यायं स्वस्वामिनं विश्वासघातेन न पकः स्यादित्यपि न
संभवति. दानस्यापि अतएव नावसरः. विग्रहोऽपि नात्र सांमुख्येन
किंतु कूटनीतिमाश्रित्य. यो हि परस्मिन् कपटमाचरति तस्मिन् कपटा-
चरणं न्याय्यमेव मन्यन्ते राजनीतिविदः. तस्मादत्र राजनीत्याश्रयणं
विना गत्यन्तरमेव नेति. विचार्य चैवं कतिपयमंत्रिभिः सममिमं मंत्रं

संमंत्र्य 'यद्ययं यवनः कपटमाचरितुमिच्छेत् तदा कपटमाचरित्वैव स पराजेय' इति निरणयत्. बहिश्च स्वरक्षणार्थं महान्तं सन्नाहमकरोत्.

एवं कृतनिश्चयोऽपि प्रकृत्यैव सच्छीलः शिवराजः 'कथमियमापत् संतरणीयेति चिन्तामग्नः शयनसमये कुलस्वामिनीं भगवतीमनन्यभावेन 'उद्धर मामम्बास्याआपत्तेः' इति संप्राथ्य सुष्वाप. अचिरादेव सा जगदंबा स्वप्ने आत्मानं दर्शयन्ती शिवराजं 'वत्स ? त्वं मा बिभीहि. अहं त्वद्धस्तेन तं यवनं घातयित्वा त्वां यशस्विनं करिष्यामि, इत्यवदत्. प्रभाते च तं स्वप्नं स्मरन् मात्रे जिजादेव्यै कथयामास.

अथ शिवराजः सर्वान् स्वसहायानेकत्रीकृत्य जगाद- अस्मिन् समये सर्वैरपि एकत्रावस्थानं नोचितं. भवद्भिरत्र स्थातव्यं. अहं च मात्रा जिजादेव्या समं प्रतापगडदुर्गं गत्वा ततएवेमामापदं परिहर्तुं यतिष्य इति. ततो गृहीत्वा मातरं स शिवराजः स्वसेवकैः समं क्रमेण सर्वाणि दुर्गाणि परीक्षमाणोऽतिविशालशिखरवर्ति दुष्प्रवेश्यवनराजिसंकटितं प्रतापगडदुर्गमागच्छत्. तत्र च स्थितस्तस्य यवनसेनापतेः कर्माणि जानंस्तस्थौ.

स यवनसेनापतिः श्रीशिवराजं प्रतापदुर्गवासिनं निशम्य नितान्तं खिन्नः पुण्यपत्तनमुत्सृज्य प्रतापगडदुर्गमभिलक्ष्यागच्छन्

वाईनामके सुप्रसिद्धे क्षेत्रे स्वसेनानिवेशमकल्पयत्. सच विजापुराधीशेन तस्मिन् प्रदेशेऽध्यक्षत्वेन नियुक्तस्तं प्रदेशं सम्यगजानात्. अगणित-सेनाबलसमन्वितोऽपि तस्मिन् पर्वतमये प्रदेशे योध्दुमशक्नुवन् स्वधनस्य तथा सेनाबलस्य क्षयं भावयन् कपटेन शिवराजं बन्दीकर्तुं मनीषां चक्रे.

अथ शिवराजस्तदाशयं ज्ञातुमिच्छुः स्वयमेव स्वामिभक्तं सेवकं दूतत्वेन तस्यान्तिके प्रेषयामास. तन्मुखेन 'अहमस्मि विजापुरा-धीशस्य वंशपरंपरया सेवकः. अस्मिन् सह्याचलविभागे बहवो राज-द्रोहिण आसन्. तान्निहत्य कृत्स्नमपीमं प्रदेशं निष्कंटकमकार्षं. इमं च श्रीविजापुराधीशाय समर्प्य कृपया तद्दत्तं भूविभागं गृहीत्वा सन्तोषेण स्थातुमिच्छामि. यद्यपि मदीया अपराधा बहवस्तथापि युष्मदनुकंपया तान्विजापुराधीशः क्षंस्यतीति' विज्ञापयामास च.

यवनसेनापतिस्तु इमं संदेशं प्राप्य सानन्दः शिवराजो बिभेतीति मन्वानो वाईग्रामाध्यक्षं कृष्णाजिभास्करनामानं ब्राम्हणं स्वदूतत्वेन शिवराजस्य समीपे प्रैषयत्. अवदच्च तं 'यथा शिवा-जिर्दुर्गान्निर्गत्याधस्तादिह वा मां द्रष्टुमागमिष्यति तथा कुरु' इति.

शिवराजस्तु तं दूतमागच्छन्तं ज्ञात्वा प्रत्युद्गतो महतोत्सवेन तं राजसभामानिनाय. कुशलमापृच्छ्य निवासाय गन्तुमनुमुमुदे.

अथ निवृत्ते मध्यरात्रे सर्वेषु जनेषु सुप्तेषु शिवराज एकाकी तस्य दूतस्य निवासगृहं गत्वा विनयेन भक्त्या च जगाद–विप्रश्रेष्ठ ? मया खलु इदं कृत्यं स्वदेशस्य तथाऽसमर्थानां दीनानां रक्षणाय प्रारब्धं. इमे च यवनाः कृत्स्नं भारतवर्षमाक्रम्य यथेच्छं वर्तमाना नः सर्वानपि पीडयन्ति. देवालयानि च नाशयन्ति. तत् सर्वैरपि संभूयेयं सनातनधर्मपीडा दूरीकरणीया. वयं च क्षत्रिया बाहुबलसहायाः. सर्वेषु वर्णेषु द्विजा एव श्रेष्ठाः. तेषां मतमेवान्ये सर्वेऽपि अनुसरन्ति. तद्यदि सनातनधर्मप्रीतिरथच मातृभूमिभक्तिरवशिष्टा स्यात्तदा किमपेक्षते यवनसेनापतिरिति सत्यं वक्तव्यमिति. सोऽपि दूतो जात्या ब्राम्हणः शिवराजस्य लोकोत्तरं भाषणं निशम्य सन्तुष्टः स्पष्टमेव 'स यवनसेनापतिर्युष्मान् बन्दीकृत्य नेतुमिच्छतीति' सत्यं तदाशयं जगाद. ततस्तेन समं संमन्त्र्य शिवराजः 'स यवनसेनापतिरत्रैवानेयः. यदि स पापमाचरेत्तदा वयमपि तथैव करिष्याम' इति निरणयत्. निर्णीय चेत्थं तं दूतं गोपीनाथनाम्ना स्वदूतेन समं विसर्जयामास.

स तु कृष्णाजीभास्करो यवनसेनापतिमवदत्. युष्मत्प्रतापश्रवणेन भीतः शिवराजः प्रतापगडदुर्गात् कथमपि बहिर्निर्गन्तुं नैच्छत्. मया भूयोभूयो बोधितः कथमपि युष्मान् द्रष्टुं धैर्यमालंबत. शिवराजश्च सत्यमेव बिभेति युष्मत्कृपां याचते च. तत्तदनुरोधेन संमेळनस्थानं निर्णेयमिति. अफझुलखानश्च स्वदूतस्येदं भाषणम-

कृत्रिमं मन्यमानः प्रतापगडदुर्गस्याधस्तादेव संमेलनस्थानं विधातुं तमादिशत्. सोऽपि कृष्णाजिभास्करस्तावतैवात्मप्रयत्नं सफलं मन्यमानः शीघ्रं तादृशं संमेलनस्थानं विरचयितुं शिवराजं विज्ञापयामास.

अथ तेन यवनसेनापतिना सह मीलितुं महत्या त्वरया जावळीविभागे शिवराजो विस्तीर्णं मण्डपं विरचयामास. येऽन्ये प्रतापगडदुर्गगामिनो मार्गा आसंस्तान् सर्वान्विशालवृक्षसंकटितान्विधाय केवलमेकमेव मार्गं गमनागमनयोग्यं स्थापयामास. तस्मिन्नपि मार्गे स्थाने स्थानेऽतिघनवृक्षराजिसमाच्छादितासु दरीषु स्वामिभक्तानां सेवकानां संघान् न्यधात्. अशाच्च सर्वान्– 'यद्यदपेक्षेत यवनसेनापतिस्तदीयाः सैनिका वा तत्सर्वमविचार्य देयमिति.' शिवराजश्च कृष्णाजिभास्करेण सह कृतं मंत्रं केवलं नेताजिपालकरनाम्ने स्वसेनापतये, मोरोपन्तपेशवेनाम्ने मुख्यामात्याय, तथा तानाजिमालुसरेनाम्ने बालमित्राय न्यवेदयत्. तैः समं संमंत्र्येत्थं निरणयत्. नेताजिपालकरेण प्रतापगडदुर्गस्य पूर्वेण स्वसेनां गृहीत्वा वनराजौ निभृतं स्थातव्यं. मुख्यमंत्रिणा च जावळीविभागस्थयवनसेनामभितोऽतिनिभृतं ससैन्येनास्थेयम्. यदा चास्मदभिलषितं सेत्स्यति तदा शृंगध्वनिर्भविष्यति. तं च समाकर्ण्य सेनापतिना मुख्या सेना समाक्रमणीया. ततःपरं पंच शतघ्नीध्वनयो भविष्यन्ति.

तानाकर्ण्य मुख्यामात्येन जावळीविभागमागता यवनसेना नाशनीया. सर्वैरपि सावधानेन वर्तनीयमिति.

इत्थं बहिर्व्यवस्थाप्य प्रतापगडदुर्गे सर्वान् स्वसहायानेकत्रीकृत्य जगाद–अस्माभिरीदृश उद्योगः प्रारब्धः. सनातनधर्मस्योद्धारो विप्ररक्षा पतिव्रतानां शीलरक्षणमेवास्माकमुद्देश्यम्. तद्यदि अहमेतत्कर्म कुर्वन्नेव प्राणांस्त्यक्ष्यामि तदा स्वर्गप्राप्तिर्निश्चितैव. परन्तु भवद्भिर्यावच्छक्ति समारब्धमिदं कार्यं समापनीयमेव. यदि दुर्दैवतोऽस्मिन् संमेलनेऽन्यथा भविष्यति तदा युष्माभिर्धैर्यमवलंब्य मातरं जिजादेवीं प्रमाणीकृत्य स्वराज्यवृद्धिः करणीयेति. इदं च शिवराजस्याकृत्रिमं निर्वाणकालिकमिव भाषणमाकर्ण्य सर्वेऽपि स्वामिभक्ताः सेवकाः परं दुःखाकुलाः स्वराज्यवृद्ध्यर्थं शपथमकार्षुः.

अथ नियते दिने सर्वानपि स्वामिभक्तान् महाराष्ट्रियांस्त्वरयन्निव स्वकुलभूषणस्य महाराजशिवनृपतेः पराक्रमं द्रष्टुमिच्छन्निव भगवान् भास्कर उदयाचलशिखरमारुरोह. तदानीमेव सर्वे मावळेसैनिकाः स्वस्वशस्त्राणि धारयन्तः स्वाधिपैः समं नियतं स्थलमलंचक्रुः. प्रतापगडदुर्गमभितो वर्तमानं तुहिनं शिवराजपक्षानुकूलमिव सर्वानपि तान् गोपयित्वाऽभीष्टं स्थलं प्रापयत्. शिवराजोऽपि ज्ञातसकलवृत्तो महति प्रभाते उत्थाय शान्तचित्तेन भगवतीं संपूज्य तद्दत्तं पुष्पहारं यशस्तोममिव शिरसा समुद्वहन् वस्त्राणि परिधत्तेस्म. स च प्रथमत-

एव कपटिनं पापमतिं तं यवनसेनापतिं जानन् सर्वाण्यस्त्राणि गृहीत्वा व्याघ्रनखमपि जग्राह. भूयोभूयो भवन्ति शुभसूचकानि चिन्हानि पश्यन्नुत्साहेन दत्तहस्तावलंबो भगवतीं नमस्कृत्य मातरं जिजादेवीं नमस्कर्तुमाययौ. वाचकाः! सती जिजादेवी महाकार्यार्थं साहसकारिणं वीक्ष्य खिन्नाऽपि धैर्यमवलंब्य तमाशीर्वचनैः प्रोत्साहयित्वेदमुपदिदेश. वत्स! प्रकृत्यैव कपटशीला यवनजातिः. कदापि विश्वासार्हा न. अयं च अफझुलखानः कपटमतिस्त्वयि पापमाचरितुमिच्छतीति सर्वेऽपि जनाः कथयन्ति. तत् सावधानो भूत्वा वर्तस्व. अनेनैव यवनेन त्वदीयो ज्येष्ठो भ्राता संभाजिः कपटेन निहतः. तद्यदि शक्यं तदैनं हत्वा वैरं निर्वर्तयेति. ततः सा भारतमातेव माता जिजादेवी शिवराजस्य बालमित्राणि तानाजिमालुसरेप्रभृतीन्युपदिदेश. वत्साः! अधुना नायं मदीयो बालः किंतु यवनतापसंतप्ताया आर्यभूमेः. यूयमपि तथैव. तस्मात् परस्परं बन्धव इव परिपालयन्त उत्कर्षं लभध्वमिति. निशम्येदं भाषणं सर्वे ते शिवराजसेवकाः परं सोत्साहा अभवन्.

यवनसेनापतिश्च शिवराजं बन्दीकृतकल्पं मन्यमानो विजापुराधीशात् प्राप्तान् सन्मानान्विचिन्त्य सुखायमानो बलिपशुर्यज्ञमण्डपमिव तं संमीलनमण्डपं स्वदूतेन कृष्णाजिभास्करेण समं समागन्तुं कतिपयसैनिकैः सह स्वस्कंधावारात् प्रातिष्ठत. कृष्णाजिभास्करश्च

तावतोऽपि सैनिकान्विघ्नकारिणो मन्वानः 'प्रथमत एव भीतः शिवराजः समागतानेतावतः सैनिकान् पश्येत्तदा संमीलितुं नागच्छेत्. तथा च युष्माकं मनोरथः सफलो न भवेत्. तदिमान् सैनिकान् मार्गे एव स्थापयित्वा केवलमेकाकिना स्वामिना तत्रोपस्थातव्यं. प्रकृत्यैव बलाढ्यस्य करीन्द्रबलशालिनो भवतः पुरस्तादल्पबलः शिवराजः कियती मात्रा ? इति. सोऽपि कालापहृतबुद्धिः सर्वं तदीयं वचनं सत्यं मत्वा तथाकुर्वन् केवलमेकेनैव सेवकेनान्वितः सभामंडपं प्राविशत्.

अथ प्रतिपालयति युष्मदागमनं यवनसेनापतिरिति कृष्णाजिभास्करेण प्रेषिते संदेशे शिवराजः परमस्वामिभक्तैः सेवकैः समं बलिपशुहननाय दीक्षित इव शिबिकामारुह्य प्रतापगडदुर्गाच्छनैः शनैरवतीर्य सभामण्डपमायासीत्. अचिरादेव शिवराजं समागतमवेक्ष्याफजुलखान उत्थाय तस्थौ. शिवराजोऽपि भीतभीत इव नम्रीभूय शनैः शनैरागच्छत्. तद्वीक्ष्य कृष्णाजिभास्करः 'प्रथममेव युष्मत्प्रतापानाकर्ण्य भीतः शिवराज इदं तादृशप्रतापयोग्यं शरीरं युष्माकं वीक्ष्य बिभेति. तदस्य विश्वासदानाय सेवकोऽपि दूरीकरणीयः' इति शनैरवदत्. सोऽपि कपटमतिः शिवराजं दुर्बलं मन्वानस्तथाकृत्वा पुरस्तीभूय शिवराजमालिंगितुं बाहू प्रसार्य तदन्तः प्रविष्टं शिवराजं स्वकक्षे धृत्वाऽपरेण हस्तेन निस्त्रिंशप्रहारमकरोत्.

प्रकृत्यैव चपलः शिवराजस्तमेतं प्रहारं शिरस्त्राणेन विफलीकृत्य ज्ञातकापट्यः सहसा दक्षिणहस्तन्यस्तं व्याघ्रनखं तस्य दुष्टस्य यवन-सेनापतेर्विशाल उदरे निक्षिप्यान्तर्नाडीर्बहिर्निष्कासयामास. अमोचयच्चात्मानं लीलया. बलाढ्यो यवनसेनापतिः स्वोदरव्यथामगण-यित्वा पुनरपि शिवराजस्य देहे तीक्ष्णं खड्गप्रहारमकरोत्. परन्तु तमपि कंचुकेन विफलीकृत्य सावधानः शिवराज एकमेव खड्गप्रहारं कृत्वा तस्य यवनसेनापतेर्विशालं शरीरं छुरिकया कर्कटीवाग्रीवातो मध्यपर्यन्तं लुलाव. तदानीमेव भूमितले पपात तदफ्झुलखानस्य निर्जीवं शरीरं. स्वस्वामिन इमां दशां विलोक्य क्रुद्धः स यवनसेवकः खड्गहस्तः शिवराजं प्रहर्तुं यावदायाति तावदेव शूरेण तानाजिना लीलया निहतः स्वस्वामिदर्शनार्थं जगाम.

अथ युध्यमानजनकोलाहलं श्रुत्वा समागता उभयपक्ष्या जना अयुध्यन्त. अस्मिन्नेव संरंभे शिबिकावाहकास्तस्य यवनसेनापतेः शवं शिबिकायां निधाय पलायितुमारभन्त. तदालोच्य शिवराजसेवका महता जवेनानुधावन्तस्तान् शिबिकावाहकान् हत्वाऽफझुलखानस्य रुण्डं गृहीत्वाऽगच्छन्. इममलौकिकं विजयं लब्ध्वा कृतकृत्यं शिवराजं दृष्ट्वा सानन्दे भगवति भास्करे शयनागारोन्मुखे ते सर्वेऽपि वीराः समं शिवराजेन प्रतापगडदुर्गमागच्छन्. शिवराजश्च तदानीमेव शृंगध्वनिमकारयत्. तमाकर्ण्य वीरशिरोमणिर्नेताजिपालकरो यवनसे-

नामाक्रम्य नामशेषां व्यधात्. ततश्च क्रमेण जायमानान् पंच शतघ्नी-ध्वनीन् श्रुत्वा सानन्दः प्रधानामात्यः सिंहो हरिणयूथमिवाव्यवस्थितं यवनसैन्यमाक्रम्य कांदिशीकं चक्रे. इत्थं विजयश्रियं लब्ध्वा कृतकृत्यः शिवराजः प्रथमं भगवतीं भवानीं नमस्कृत्य तस्याः पादकमलयो स्तद्रुण्डमर्पयामास. ततो मातरं वन्दितुं जगाम. माता जिजादेवी स्वपुत्रं विजयशालिनं भगवतीप्रसादात् पुनर्लब्धं मन्यमाना तमाश्लि-ष्य मूर्ध्नि समाघ्राय 'वत्स! शिवराज! अद्य सत्यमेव त्वयाऽहं वीरमाता कृता. यदाऽयं यवनः कपटेन त्वदीयं ज्येष्ठं भ्रातरमवधी-त्तदाऽहं पुत्रशोकविव्हला अस्य नाशार्थं देवीं प्रार्थये. तां प्रार्थनां भगवत्यद्य सफलयामासेति गदन्ती सर्वान् सेवकान् प्रशशंस.

शिवराजश्च ततो निर्गतः स्वसैनिकानां दर्शनार्थमधस्तादाययौ. तत्र गत्वा ये शस्त्राघातविव्हला आसंस्तान् सांत्ववचनैः संतोषयामास. ये खलु रणेऽसामानुषं कर्म चक्रुस्तेभ्यो योग्यानि पारितोषिकाणि वित-तार. येऽपि यवनसैनिकास्तानपि आदृत्य स्वसेवोत्सुकान् स्वसेनाया-मस्थापयत्. अन्यांश्च स्वस्वस्थानं प्रति प्रेषयामास.

वाचकाः? शिवराजो यथा कृतज्ञ आसीत्तथैव कृतघ्नान् प्रति चण्डदण्डोऽपि. उचितमेवैतत्. अन्यथा राज्ये व्यवस्था न स्यात्. अस्मिन्नेव प्रसंगे खंडोजीकांकडेनामा कश्चन स्वदेशद्रोही रणे शस्त्रा-घातविव्हलं फाजलखाननामानं अफझुलखानस्य पुत्रं निभृतं गोपयित्वा

कऱ्हाडनगरं प्रापयामास. जग्राह च तस्मात् प्रभूतं धनं. तदेतद्वृत्तं निशम्य संतप्तः श्रीशिवराजस्तं विश्वासघातकं बन्दीकृत्य तस्य शिरश्चिच्छेद. एतेन भीताः सेवकाः स्वस्वकर्माणि स्वामिभक्त्याऽकार्षुः. अस्मिन् युद्धे शिवराजः प्रभूतं गजबलं तथाऽश्वान् शतघ्नीसमूहं कोशांश्च लेभे.

२

तमिमं स्वसेनापतेः पराजयं तथा निधनं सर्वसेनायाश्च क्षयमाकर्ण्य सा राजमाता समं स्वपुत्रेण शोकसागरमग्ना दिनत्रयमन्नं न जग्राह. सर्वेऽपि यवना इमं वृत्तान्तमाकर्ण्य स्वराज्यस्य प्रलयकालं समीपमागतं मेनिरे. तदानीमेव शिवराजः पन्हाळानामकं बलाढ्यं दुर्गं स्वायत्तीचकार. इमां वार्तां श्रुत्वा चिन्तातुरो विजापुराधीशो रुस्तुमजमाननामानं मिरजप्रान्ताध्यक्षं तच्छासनायाज्ञापयामास. तं च कथंचित्स्वामिकोपभीत्या समागतं वराकं शिवराजो लीलया पराजित्य तत्सैन्यानुधावनमिषेण विजापुरनगरपर्यन्तं सर्वमपि प्रदेशं लुलुण्ठ.

इत्थं प्रबलीभवन्तं शिवराजमवेक्ष्य चिन्तातुरो विजापुराधीशः कर्तव्यमूढोऽजायत. अत्रान्तरे शिद्दीजोहारनामा कश्चन तदीयः सेवकः स्वमित्रमुखेन शिवराजशासनार्थं गन्तुं मनीषां दर्शयामास. अयं च शिद्दीजोहारः परं दुर्दान्तो विजापुराधीशाज्ञामपि नामन्यत.

तेन विजापुराधीशो रुष्ट एवासीत्. इमां तदीयामभ्यनुज्ञामनुज्ञाय महताऽऽदरेण तं राजसभामाहूय सत्कृत्य च शिवराजविजयाय विसर्जयामास. तेन स अफझुलखानस्य पुत्रः पितृवधकुपितस्तस्य शिवराजस्य शासनार्थं ययौ. इमां च वार्तां चतुरचारगणनिवेदिता-माकर्ण्य शिवराजः सावधानो भूत्वाऽस्या आपदः परिहारार्थं प्रायतत. प्रथमतः सर्वाणि दुर्गाणि अन्नसामग्रीपरिपूर्णानि विधाय कृत्स्नस्य राज्यस्य रक्षणार्थं स्थाने स्थाने शूरान् सेनापतीन् स्थापयित्वा स्वयं दुर्गराजे पन्हाळादुर्गेऽतिष्ठत्. तौ यवनसेनानायकौ शिवराजं पन्हाळादुर्गस्थमाकर्ण्य तद्दुर्गं रोध्दुं त्वरया समागच्छताम्, शिद्दी-जोहारश्च महता चातुर्येण तत्कृत्स्नमपि दुर्गं निरुध्य निरुच्छ्वा-समकरात्.

एवं निरुद्धे गमनागमने व्यतीतेषु चतुर्षु मासेषु श्रीशिवराजो बहिर्वर्तिनां स्वकीयानां वृत्तमजानन् महति संकटे निपतितमात्मानं मेने. तदधिकारिणोऽपि स्वस्वामिवृत्तमविज्ञाय संभ्रान्ता अभवन्. एवं गच्छति काले शिवराज एवमेकत्रावस्थानमनुचितमिति भावयन् पुनरपि राजनीतिमुपयोक्तुं मतिं चक्रे. ततः स तेन सेनापतिना समं संलपितुं स्वदूतं प्रैषयत्. विज्ञापयामास च तन्मुखेन—अहं चात्र सर्वथा युष्माभिर्बन्दीकृतः. मदीयं वृत्तं न मदीया अधिकारिणो जानन्ति नाप्यहं तेषां. तत् साम्प्रतं संधिं कर्तुमिच्छामि. यद्यभय-

वचनं दास्यथ तदाऽहमेव संधिनियमान्विधातुमधस्तादागमिष्यामीति. स तु यवनसेनापतिः शिद्दीजोहारः श्रुत्वैवं दूतकथितं संदेशं सानन्दः सर्वथाऽनुमुमुदे.

अथ शिवराजः कतिपयसेवकसहितोऽधस्तने दुर्गविभागे स्थित्वा तत्रैव तमपि सेनापतिमाहूय दुर्गमोचनार्थं तथाऽन्यांश्च संधिनियमानधिकृत्य समलपत्. अस्मिन्नवसरे संध्यासमयो जात इति श्वोऽवशिष्टं कार्यं समापयिष्याम इति निगद्य शिवराजः स्वनिवासमाययौ. यवनसेनापतिरपि स्वावासं. तस्मिन्दिने सर्वेऽपि यवनसैनिकाः संधिर्भविष्यतीति मन्यमानाः पूर्ववत् सावधाना नासन्. तदालोच्य गृहीतकतिपयसेवको पूर्वमेव संकेतिते स्थले शिवराजो दुर्गादवततार. अवतीर्य च महता वेगेन विशालगडदुर्गमभिलक्ष्याधावत. शिवराजस्य दुर्गतो निर्गमनं विलासमग्नैर्यवनसेवकैः कियताऽपि कालेन विज्ञाय स्वसेनापतये निवेदितम्. स तु तदाकर्ण्याशनिना मूर्ध्नि निहत इव भ्रान्तः कुपितः सहसा फाजलखानं तथा स्वकीयं पुत्रं महताऽश्विकसैन्येन समं शिवराजं बन्दीकर्तुं प्राहिणोत्.

शिवराजश्च सर्वं तं पर्वतमयमपि प्रदेशं जानन् महता जवेन विशाळगडदुर्गगामिना मार्गेण जगाम. अथ समुदिते भगवति भास्करे तदीयकिरणैर्विनाशिते सकलनिशान्धतमसे, प्रकाशितासु

सर्वासु सह्याचलशिखरततिषु, तेऽनुधावन्तो यवनसैनिकाः शिवराजं विशालगडदुर्गस्योपत्यकायामपश्यन्. विशाळगडदुर्गं च ततो विप्रकृष्टं कोशत्रयेणासीत्. ते तु यवनसैनिकाः शिवराजं दृष्ट्वा महता जवेनान्वधावन्. तदानीं शिवराजो विप्रकृष्टं दुर्गं समीपमागतं यवनसैन्यमालोक्य चिन्तातुरः कर्तव्यमपृच्छत्. तदा स्वामिभक्तश्रेष्ठो देशपाण्डेकुलाभिधानी बाजीप्रभुः सत्वरं शिवराजं जगाद. ' स्वामिन्? अद्यापि विशाळगडदुर्गं विदूरं वर्तते. शत्रुसैनिकाश्च जवेन धावन्तः समागतकल्पा एव. तदधुना कतिपयजनैः सममहमस्मिन्नेव दुष्प्रवेश्ये दुर्गमार्गे स्थित्वा शत्रुसैनिकान् रोत्स्यामि. विशालगडदुर्गं प्राप्तैर्भवद्भिर्विहितान् शतघ्नीध्वनीनाकर्ण्य सावधानेन पश्चादागमिष्यामि इति. शिवराजश्च तदीयमिदं भाषणमाकर्ण्य चिन्तातुरः सगद्गदं प्राह–मित्र! बाजीप्रभो! त्वामहं कथमल्पजनैः समं मुक्त्वाऽग्रे गमिष्यामि. यवनसैनिकाश्च प्रलयपयोधिवीचय इवासंख्या आपतन्ति. शिवराजश्च स्वप्राणापेक्षया स्वामिभक्तानां सेवकानां प्राणानधिकमूल्यान् मन्यते. तद्यद्भावि तद्भवतु. अत्रैव स्थित्वा शत्रुप्रतीकारं करिष्यामि न पुनस्त्वां बलिं विधायात्मप्राणान् रक्षितुमिच्छामि ' इति. चिन्ताम्लानमुखं स्वल्पाश्रुजलपूरितराजीवाक्षं दयानिधिं स्वामिनं शिवराजं तथा पूर्णचन्द्रतिरोधानाय समापतन्तीर्मेघमाला इव यवनसैनिकानां पंक्तीः समालोक्य कृतनिश्चयः स्वहस्तकमलाभ्यां तदीये चरणसरोजे धृत्वा बाजीप्रभुः प्रत्युवाच–

नाथ ? मम चिन्ता न कर्तव्या. यदि जीविष्यामि तदा स्वसेवकरक्षणदक्षं स्वामिनं सेविष्य एव. यदि च स्वामिनं सेवमानः समरे पतिष्यामि तदा ततोऽपि नः सेवकानां किमधिकं श्रेयः ! जीवत्सु स्वामिपादेषु मत्सदृशा अगणिताः सेवका आगमिष्यन्ति. नाथ ? त्व खलु न स्वसुखस्य कृते जीवसि किंतु गोब्राह्मणानां तथा सनातनधर्मस्योद्धारार्थं. एषा मातृभूमिस्त्वामाज्ञापयति अधुना समयापहरणं विहाय विशालगडदुर्गं प्रति गन्तव्यमेवेति. स्वामिन् ? त्वां विनाऽनाथामिमां मातृभूमिं कः पालयिष्यतीति. शिवराजस्तु तस्येदं हृदयहारि भाषणं निशम्यागत्या स्वल्पैः सेवकैः समं तमाश्रित्य विशाळगडदुर्गं गन्तुं प्रतस्थे.

इत्थं शिवराजं संप्रेष्य निश्चिन्तः स स्वामिभक्तसेवकमुकुटमणिर्बाजीप्रभुस्तस्मिन्नेव दुर्गमार्गे शत्रूणां प्रतिबन्धार्थं स्वसैनिकान् स्थापयित्वा स्वयं निष्कोषं खड्गं गृहीत्वा तस्थौ.

अचिरादेव यवनाः शिवराजं मार्गस्थं पश्यन्तो महता जवेन तस्य दर्गमुखस्य पुरतः समागच्छन्. तान् समागतान् वीक्ष्य पूर्वं स्थापितैः स्वसैनिकैः समं बाजीप्रभुः शत्रुसैन्यं महता शौर्येणाचक्राम. अकस्मादेव तदाक्रमणं प्राप्य संख्ययाऽधिकमपि शत्रुसैन्यं कातरीभूय पश्चात् पलायतेस्म. प्रतिनिवर्तमानं स्वसैन्यमवेक्ष्य कोपाकुलः शिद्दीजोहारस्तत्प्रतिरोधकं सैन्यं स्वयं पुरतो भूत्वाऽऽचक्राम. प्रावर्तत च भूयान् संग्रामः.

परन्तु भीष्मपराक्रमः स बाजीप्रभुरल्पीयसा सैन्येन सर्वान् बलभराढ्यान् शत्रुसेनापतीन् पराङ्मुखान् चक्रे. अत्रान्तरे तयोः साहाय्यार्थं शतघ्नीविभागोऽपि समाययौ. ततः शतघ्नीगोलकेषु वेगेन निपतत्सु सत्सु बाजीप्रभोः सैनिकाः क्रमेणाक्षीयन्त. प्रतिपक्षं क्षीयमाणसैनिकमवलोक्य शिद्दीजोहारो महता धैर्येण समाचक्राम, परन्तु स नरव्याघ्रा बाजीप्रभुस्तथैव युध्यमानो न मुमोच मार्गं.

अस्मिन्नवसरे शत्रुपक्षादागतेन शतघ्नीगोलकेन छिन्नांगो विकलो भूत्वा स समरभूमौ पपात. परन्तु तस्यान्तःकरणं भविष्यत्सु शतघ्नीध्वनिषु लग्नमासीत्. इतो निर्गतस्य स्वामिनस्तिस्रो घटिकाः संवृत्ताः. अद्यापि स्वामिचरणाः कुतो न विशाळगडदुर्गं गताः? मार्गेऽन्यद्विघ्नान्तरं प्रादुरभवद्वा ? भगवन् ? मदीयप्राणनिर्गमनात् पूर्वं शतघ्नीध्वनिं श्रावयित्वा मां कृतार्थं कुरु! इति चिन्तयति तस्मिन् देशभक्ते स्वामिभक्तसेवकमुकुटमणौ बाजीप्रभौ विशाळगडदुर्गात् पंच शतघ्नीध्वनयोऽजायन्त. तान् कर्णेकृत्वा सन्तुष्टः स बाजिप्रभुर्मनसैव स्वामिचरणान्नमस्कृत्य 'कृतं मया कर्तव्यं, इत्यक्षराण्युच्चार्य प्राणान् व्यसृजत्

वाचकाः? ये खलु जगतीतले शूरा वीरा जातास्तेषु सर्वेषु बाजीप्रभुः प्रथम इति सर्वेऽपि इतिहासविदो वदन्ति. केवलं स्वामिप्राणरक्षार्थं स्वप्राणा येन तृणीकृताः स कथमिव स्तुत्यो न. नह्य-

स्मिन् जगतीतले कोऽपि चिरंजीवी. तथापि यैः खलु ईदृशानि दुष्कराणि कृत्यानि कृत्वा ज्योत्स्नाधवलं यशो लब्धं त एव धन्याः! सज्जनाः? एतादृशा नरवीराः शिवराजस्य सहाया आसन्नित्यतएव महाराष्ट्रभूः स्वातंत्र्यसौभाग्यतिलकेन भूषिता बभूव.

अथ स्वकर्मार्जितं पुण्यलोकं गतवति तस्मिन्नरवरे बाजीप्रभौ तदनुयायिनः कर्तव्याभावं पश्यन्तस्तस्य शवं स्कंधेनोद्वहन्तोऽन्येनैव मार्गेण विशाळगडदुर्गं समागच्छन्. शिवराजश्च तस्य स्वामिभक्तस्य बाजीप्रभोः स्वर्गगमनं ज्ञात्वाऽत्यन्तं शोकाकुलः स्वयं पद्भ्यां क्रोशपर्यन्तं प्रत्युद्गम्य तदीयं शवं शिबिकायां स्थापयित्वा तां स्कंधेन स्वयमुद्वहन् महताऽदरेणोत्सवेन चाग्निसाच्चक्रे. तदीयांश्च सप्त पुत्रानाहूयादृत्य च शिबिकादिमानदानेन तान् स्वसेवायां स्थापयामास.

ततोऽप्रतिबंधं मार्गमालोक्य तेनैव तौ सेनापती विशाळगडदुर्गस्याधस्तादागच्छतुः. तत्र जलाभावं तथा ग्रीष्मकालकृतं तृणान्नदौर्भिक्ष्यं वीक्ष्य स फाजलखानः पन्हाळादुर्गं प्रत्याजगाम. ततश्च पन्हाळादुर्गरोधमपि विफलं मन्यमानः स शिद्दीजोहारः समीपमागतं वर्षासमयमालक्ष्य स्वसैन्येन समं विजापुरं प्रतिन्यवर्तत. मेने च शिवराजमजेयम्.

( ४ )

विजापुराधीशश्च तं रिक्तहस्तं क्षपितसैन्यं शिवराजपराजितं प्रत्यागतं शिद्दीजोहारमवेक्ष्य कोपसंतप्तस्तं सभागमननिषेधनापमानितं व्यधात्. स च यवनाधिपस्वभावं सम्यग्जानन् तमदृष्ट्वैव कर्णाटविभागं ययौ. ततो विजापुराधीश्वरः प्रतिदिनं शिवराजाक्रमणान्यसहमानः स्वयमेव गत्वा शिवराजं शासितुमियेष. शिवराजशासनाय निर्गतं विजापुराधीशमवगम्यान्ये सर्वेऽपि तदाश्रिताः सामन्ताः स्वस्वसैन्यान्यादाय तममीलन्. तेन यवनसेना महती बभूव. विजापुराधिपश्च स्वसेनां सन्नद्धामालोक्य विलंबे शिवाजिः सावधानः स्यादिति मन्वानः सहसा निर्गतः शिवराजराज्यं प्रविश्य सर्वाणि दुर्गाणि स्वायत्तानि चक्रे. पन्हाळादुर्गमपि विजिग्ये. केवलं रांगणाविशालगडदुर्गे एव न जिगाय. शिवराजश्च विजापुरस्वामी दुर्गाणां ग्रहणेन क्षीणबलः सुजेयो भवेदथ च तस्मिन् स्वदेशं गते पुनरपीमानि दुर्गाण्यस्माकमेवेति भावयन्न तं रुरोध.

अत्रान्तरे वर्षासमयः समाजगाम. तस्य च तस्मिन् पर्वतमये सततं संचरद्घनघटादृश्यमानमानवं, महता वेगेन प्रवहज्जलौघसहस्राक्षिप्तप्रचण्डशिलासहस्रसाबाधसंचारं, क्लिन्नसकलसामग्रीदुर्लभान्नं रविकिरणास्पृष्टं घोरं स्वरूपमालोक्य भीतः स विजापुराधीशस्ततो निर्गत्य कृष्णानदीतीरे स्वसेनानिवेशं कल्पयित्वा तस्थौ. तदानीमेव स क-

र्णाटकविभागे समुद्भूतं राजद्रोहं शुश्राव. श्रुत्वा चेदं वृत्तं विजापुराधीशः परं चिन्तामग्नो मनस्यकरोत्. यदि कर्णाटकप्रान्ते समुद्भूतं राजद्रोहमुपेक्ष्य केवलं शिवराजस्य शासनार्थमेवात्र स्थातव्यं तदा महामूल्यो राज्योपयोगी कर्णाटकविभागो हापितः स्यात्. अथ तत्रैव गमिष्यामि तदा शिवाजिः प्रबलः स्यादिति. इत्थं चिन्तापरे विजापुराधीशे तत्सामन्तः कश्चन सावंतनाम्ना विनयेन जगाद. स्वामिन्? भवद्भिः कर्णाटकप्रान्ते गन्तव्यं. अहं च भवद्भ्यः स्वल्पं साहाय्यं गृहीत्वैनं शिवराजं पराजेष्य इति. सोऽपि अगतिकस्तस्येमां विज्ञप्तिमंगीकृत्य तस्य साहाय्यार्थं बहलोलखाननामानं स्वसेनापतिं निधाय स्वयं कर्णाटकविभागमगात्. तौ च महतोत्साहेन सेनासन्नाहमकुरुताम्.

शिवराजश्च विजापुराधिपतिं कर्णाटकविभागं गतं श्रुत्वा सन्तुष्टः स्वशासनाय तेन नियुक्तं तं सावंतसामन्तं तदानीमेवाक्रम्य पराजयत. तस्य सहायं बाजीघोरपडेसामन्तं शहाजिराजानां विश्वासघातकं जघान. यवनसेनापतिं तु लीलयैव कांदिशीकं व्यधात्. स च सावंतसामन्तो विनयेन स्वापराधान्विस्मर्तुं विज्ञापयामास.

(५)

एवं सर्वतः समुज्ज्वलितं शिवराजप्रतापं वीक्ष्य भयातुरः विजापुराधिपः स्वराज्यस्यापायमाशंकमानश्चिन्तयामास. नास्ति साम्प्रतं

संधिं विनाऽन्य उपायः शिवराजस्य वशीकरणे. यद्येवमेव विग्रहः प्रचलेत्तदा वर्धमानबलः सततं विजयश्रिया समलंकृतः शिवराजोऽस्माकं कृत्स्नं राज्यं स्वायत्तीकुर्यात्. संधिश्च यथा चिरस्थायी स्यात्तथा स श्रेयस्करो भवेत्. यद्यन्यः कश्चन मदीयोऽधिकारी संध्यर्थं गच्छेत्तदा स धूर्तः शिवाजिः संधिनियमान् स्वानुकूलानेव नानाविधैरुपायैः कुर्यात्. तस्माद्यो हि अस्मद्राज्यस्याभिमानी स्यादथ च तं शिवाजिरपि बहु मन्येत ईदृशः कश्चन शोधनीय इति. इत्थं विचिन्तयति विजापुराधिपे तदीया मंत्रिणः शहाजीराजमीदृशं दर्शयामासुः. विजापुराधिपतिः शहाजिराजानाहूय संधिविधानार्थमयाचत. शहाजिराजा-अपि पराक्रमशालिनः स्वराज्यस्थापकस्य पुत्रस्य दर्शनार्थमुत्सुका इमां स्वामिप्रार्थनामंगीकृत्य निर्गताः क्रमेण तुळजापुरवासिनीं भगवतीं प्रणम्य पंढपुरस्थं श्रीविठ्ठलेशं नमस्कृत्य शिवराजं विलोकितुं पुण्यपत्तनमुद्दिश्यागच्छन्.

शिवराजोऽपि एतद्विदित्वा प्रमुदितः स्वागतसन्नाहं विधाय 'पितृदर्शनं च जेजुरीक्षेत्रे देवालये ग्राह्यमिति' विद्वत्संमत्या तत्रैव गत्वा पितृचरणान् साक्षात्कृत्य महता विनयेन मुकुलितहस्तकमलस्तस्थौ. शहाजिराजाअपि स्वतंत्रराज्यस्य स्थापकं गोब्राह्मणप्रतिपालकं स्वतनयमवेक्ष्य रोमांचितगात्रा हर्षप्रफुल्लनेत्रकमलाः सानन्दं विनयावनतं शिवराजं प्रसारिताभ्यां दोर्भ्यां समाश्लिष्योचुः—वत्स शिवराज!

त्वया सनाथीकृतोऽयं भोसलेवंशः. क्व चाक्रान्तसमस्तभारतवर्षा यवनसार्वभौमाः. क्व चाल्पबला वयं, तथापि पौरुषेण तानपि जर्जरीकृत्यालौकिकं यशः संपादितं. येन हि विजापुराधीशेनाहं त्वच्छासनार्थं प्रतिबन्धे निहितः सोऽहं तत्प्रार्थनया त्वया सह संधिं विधातुमागत इति किं न संतोषास्पदं ? इत्थं पराक्रमो युक्तिचातुर्यं राजनीतिपाटवं सावधानता मानवपरीक्षाप्रभृतयो गुणा आयुष्मता कुतः शिक्षिताः ? अहं तु मन्ये केवलमियं भगवत्या जगदंबायास्तथा नः पूर्वजानां कृपेति. शिवराजश्च सर्वं भाषणं निशम्य तूष्णीं स्थितः केवलमियं पितृचरणानां कृपेत्येव जगाद.

शहाजीराजाश्च षण्मासपर्यन्तं शिवराजस्य समीपेऽवसन्. शिवराजोऽपि स्वसंपादितान् भूविभागांस्तथा दुर्गाणि च दर्शयित्वा नानाविधैरुपचारैः समतोषयत्. ततः श्रीशहाजिराजाः कर्णाटकविभागं गन्तुकामाः शिवराजं संधिनियमार्थमपृच्छन्. तस्मिन् युष्मदाज्ञैव प्रमाणमित्युक्त्वा विरते सति शहाजिराजाः स्वयमेव 'अतःपरं विजापुरराज्याद्युष्माभिः किमपि नूतनं न संपादनीयं. यच्च संपादितं तत् सर्वं भवद्भिरेव भोक्तव्यं. अतऊर्ध्वं विजापुराधीशेन यूयं स्वतंत्रराजवत् संमाननीया' इति निरणयन्. स्वीचकार चेमं संधिं शिवराजः. यदा च शहाजिराजाः कर्णाटकविभागं गन्तुमुद्यतास्तदा तेभ्यो महान्ति रत्नानि तथाऽन्यत् सर्वमपि वितीर्य परं संमानयामास. स्वराज्यमर्यादापर्यन्तं स्वयमागत्य तान् व्यसर्जयत्.

अथ शहाजिराजा विजापुरनगरमागत्य सर्वं वृत्तं स्वामिने निवेद्य तेनाऽपि सानन्दं सत्कृताः कर्णाटकविभागं गताः. अचिरादेव मृगयां गता अश्वान्निपत्य परलोकमयुः. तेन शिवराजः परं दुःखाकुलोऽभवत्. जिजादेवी तु शोकभारं सोढुमशक्नुवाना सहगमनमतिं शिवराजशोकाकुलानां मंत्रिणां विज्ञप्त्या महता दुःखेन तत्याज. शिवराजोऽपि ऐश्वर्यानुरूपं पितृकार्यं चक्रे.

वाचकाः ? यः केवलं स्वप्रतापमहिम्ना विजापुरसामन्तोऽपि स्वतंत्रो भूत्वा तस्मादेव राज्ञः समानं मानं लेभे स शिवराजो धन्यस्तस्य माता जिजादेवी च धन्या. धन्याश्च ते शहाजिराजाः






१ नौकाबलम्.

२ विजितानि नूतनं निर्मितानि समुद्रदुर्गाणि.

३ नाविकसैन्यस्थापना.

४ तत्समये आंग्लानां परिस्थितिः.

( १ )

वाचकाः? एवं लब्धस्वातंत्र्यः शिवराजो विजापुराधीशेन कृतसंधिः सर्वं स्वकीयं राज्यं सुव्यवस्थितमकरोत्. यद्यपि दिल्लीश्वरोऽद्यापि शिवराजं साधारणमेव स्वसेवकं मन्यमानो न तमद्वेट्, तथापि बलिष्ठं विजापुराधीशं विजित्य शिवराजः स्वकीयं स्वतंत्रं राज्यं दाक्षिणापथे स्थापयितुमिच्छतीति ज्ञात्वा निभृतं क्रुद्धो दिल्लीश्वरः समुद्रव्यवहारिणं शिद्दीनामानं यवनं प्रोत्साहयामास. स च शिद्दीयवनो यद्यपि आत्मानं दिल्लीश्वरसेवकममन्यत तथापि प्रायः स्वतंत्र इव वर्तमानः सर्वाणि कार्याण्यकरोत्. अयं च जंजिरानाम्नि समुद्रदुर्गे

कृतप्रतिष्ठः सागरमार्गेण व्यवहरन् देशान्तरात् समागता नौका लुण्ठन् सागरतीरवर्तीनि नगराणि आक्रम्य सर्वां संपदमहरत्. शिवराजश्च दिल्लीपतिना भविष्यन्तं स्वकलहं मनसिकृत्वा स्वसैन्यं तथा कोशं च सावधानेन सन्नाहयामास. स च धनस्य लाभार्थं नानोद्यमान्विधातुं प्रजाजनान् प्रोदसाहयत्, परन्तु निभृतमागतैस्तस्य यवनस्याक्रमणैस्त्रस्ताः प्रजाजना न किमपि कर्तुं प्रबभूवुः. शिवराजेन तच्छासनार्थं सैन्ये प्रेषिते स स्वकीयं सर्वं सैन्यं नौकासु स्थापयित्वाऽन्यं देशमगच्छत्. तत्र च लुण्ठति स्म प्रजाः.

एवं प्रतिदिनं प्रबलीभवन्तं तं शिद्दीयवनं शिवराजःशासितुं तथा समुद्रवर्तिनां नगराणां रक्षणार्थं च नौकाबलस्यावश्यकतां मन्वानस्तस्य सिद्ध्ये नानादेशेभ्यः कुशलान् शिल्पिनः समाहूय महतोत्साहेन कार्यं समारभत. अगणितं धनं व्ययीकृत्य नानाविशाला नौका व्यरचयत्. तासु शतघ्नीविभागं स्थापयित्वाऽब्धावपि शत्रूनजयत्. जहार चातिविपुलां संपदं. वाचकाः ? इत्थं शिवराजं प्रबलनौकाबलसमन्वितमवलोक्य तदानींतनाः समुद्रव्यवहारिणः परकीयाः पोर्तुगीजप्रभृतयो वणिजः परं भीताः स्वरक्षणार्थं तं प्रार्थयन्त. सोऽपि तेषां रक्षणेनात्मनो राज्यस्य वृद्धिं मन्वानस्तेभ्यो नियतं करद्रव्यं गृहीत्वा तदभ्यर्थनां स्वीचक्रे.

( २ )

इत्थं प्रवर्धमाने नौकाबले तस्य स्थापनार्थं तथा शत्रुभ्यो रक्षणार्थं च समुद्रतीरे निर्वातं स्थलं निर्मातुमैच्छत्. तथैवोदधितटगतानि दुर्गाणि स्वायत्तीकर्तुं. प्रथमतः स 'कुलाबा 'नामकं दुर्गं सर्वतः संनाह्य तन्नौकाबलस्य मुख्यं स्थानमकरोत्. तत्र या काचन नौका यस्मात्कस्मादपि देशात् समागता शिवराजनियुक्तैः पुरुषैरजिज्ञास्यत. तथैव सुवर्णदुर्गविजयदुर्गप्रभृतीनि सागरतटगतानि दुर्गाणि जित्वा तान्यपि सर्वैः साधनैः परिपूर्णान्यकरोत्. तान्येतानि दुर्गाण्याश्रित्य स्थितं सर्वं नौकाबलं शत्रुनौका आक्रम्य धनादिकं गृहीत्वा कुलाबादुर्गाधिपायादात्. सोऽपि शिवराजायेति. ततोऽपि शिवराजस्य धनलाभो महानभूत्.

यदर्थं सर्वमिदं नौकाबलं शिवराजो व्यरचयत्तं शिद्दीयवनं जेतुमिच्छुः शिवराजः स्वीयं सर्वमपि नौकाबलमादाय तमाचक्राम. तस्य च बह्वीर्नौकास्तथा दुर्गाणि स्वीयान्यकरोत्. परन्तु जंजिरानामकं महादुर्गं तस्य निवासीभूतं न जेतुं पारयामास. तस्मिन् महादुर्गे स्थितः स शिद्दीयवनश्चिरं प्रायुध्यत. अगत्या तस्य दुर्गस्य समीपे मालवणग्रामस्य संनिधौ नूतनं महादुर्गं विरचयितुमिच्छन् कुशलाश्नाविकांस्तथा जलमज्जकानानीय स्थलनिर्णयार्थमादिशत्. ततश्च विप्रवरनिवेदितायां वेलायां गणेशं तथा नदीनाथं च पूजयित्वा दुर्गनिर्माणकर्म समारभत. पंचसहस्रकर्मकारिणस्तथा दुर्गसामग्रीं च

नौकासु स्थापयित्वा महत्या त्वरया दुर्गं व्यरचयत्. तच्च दुर्गं त्रिभिर्वर्षैः परिपूर्णं बभूव. तदानीं शिवराजो महतोत्सवेन स्वराजधान्याः सकाशान्निर्गतः सुमुहूर्ते तद्दुर्गं प्रविश्य ब्राम्हणान् भोजयित्वा सिंधुदुर्गनाम्ना तदलंचक्रे. एवं 'अंजनवेलि,रत्नागिरि,पद्मदुर्ग,सराजाकोट, गहनदुर्ग,खांकरी,राजकोट,प्रभृतीनि जलदुर्गाणि निर्ममौ.

( ३ )

एवं नौकाबलं निर्माय समुद्रसंचारिभिः परकीयैः समं युध्यमानः शिवराजस्तदीयानि नगराण्याक्रम्य यदा धनमहरत्तदा पुनः पुनर्युद्धप्रसंगा अजायन्त. तेषु च सेनाबलं सुतरामपेक्ष्यतेस्म. पदातिसेना च संग्रामस्य भूविभागस्य रक्षणाय पर्याप्ता न नौकासु स्थित्वा योध्दुं प्राभवत्. इदमालोच्य शिवराजो नूतनमेव नाविकबलं निर्ममौ. तत्र च द्वादशसहस्रपरिमिताः सैनिका आसन्निति प्राचीनेतिहासविदो वदन्ति. तदधिकारिणोऽपि स्थलसेनाधिकारिभ्यो भिन्ना एव. यथा हि स्थलसेनायां सेनापतयो बहवः शूरा मोरोपन्तप्रभृतयोऽभवंस्तथैव दर्यासारंग,इब्राहीमखान,मायनायकभंडारी, दौलतखाननामानः पुरुषश्रेष्ठा नाविकबलसेनापतिपदं भूषयामासुः. प्रायोऽस्मिन्नाविकबले कोळीभंडारिप्रमुखा एव जना आसन्. ते च नौकानां संचारे तथा जलयुद्धे परं प्रवीणाः सर्वानपि शिवराजशत्रून्नामशेषानकुर्वन्.

## ( ४ )

यदा हि नौकाबलं नाविकसेनासमलंकृतं विधाय शिवराजः सागराधिपत्यमपि भेजे तदा समुद्रमार्गेण वाणिज्यं कुर्वतामेतेषामांग्लानां नौकाः शिवराजनौकाभिः समाक्रान्ताः. ततश्च ते परं विनयेन नियतां युद्धसामग्रीं शिवराजाय वितीर्य तद्राज्ये वाणिज्यं विधातुमाज्ञामयाचन्त. व्यवाहरंश्च. परन्तु दिल्लीश्वरबलभीत्या दिल्लीशिवराजयोः कलहे ते तटस्था एवासन्. कदाचिदांग्लाः दिल्लीपतिं साहाय्ययन्तः शिवराजकोपपात्रीभूतास्तस्मात् अबिभयन्त. सर्वथा यथा कयाऽपि रीत्या बलाढ्यान् सर्वानपि सन्तोषयित्वा वाणिज्यमिषेण स्वार्थसाधने तत्परा एव.

वाचकाः ? इदं हि जगतीतले परमेश्वरस्य सर्वशक्तिमतो निरतिशयं चातुर्यं परिदृश्यमानं मतिमतोऽपि सुतरां मोहयति ! क्व च केवलं वाणिज्यार्थमागताः कतिपये परकीयाः ! क्व चाक्रान्तसमस्तभारतवर्षा दिल्लीश्वरप्रभृतयो यवनाधिपाः ! क्व च स्वराज्यस्य संस्थापकः शिवराजः ! परन्तु सम्प्रति त एव सार्वभौमाः संवृत्तास्तद्दायाश्च वंशजाः सामन्ततां प्राप्ताः. एवं विचारयतो मानवस्य मतिः केवलं सदा नित्यायां चैतन्यशक्तौ सज्जति नान्यत्र. अस्तु.





## ( १२ दिल्लीपतिना सह वैरोद्भवः संग्रामाश्च )

१ दिल्लीपतिना वैरस्य कारणं.

२ शास्ताखानस्य शासनम्.

३ सुरतप्रभृतीनां नगराणामाक्रमणं.

४ जयपुराधिपतिना सह सख्यम्.

५ संधिः तेन सह विजापुरराज्याक्रमणं.

( १ )

इत्थं नाविकपदातिबलाभ्यां परिपूर्णः शिवराजः सर्वां राज्यव्यवस्थां विधाय पुनरपि स्वराज्यमर्यादां वर्धयितुमिच्छुर्विजापुराधिपतिना कृतसंधिर्दिल्लीश्वरराज्यविभागमाक्रमितुमियेष. परन्तु किमपि विशेषकारणमपश्यंस्तूष्णीं तस्थौ. अचिरादेव तदपि बभूव. तच्चेत्थम्.

शिवराजसमये दिल्लीश्वरो मोंगलवंश्यः शहाजहाननामा यवन आसीत्. तस्य च चत्वारः पुत्रा दारासुजामुरादअवरंगजेवनामानः तेन राज्ञा तत्र तत्र महति पदे नियुक्ता बलाढ्या आसन्. तेषु सर्वेषु अवरंगजेबः खलु महाकपटी धूर्तः शृगाल इव राजनीतिचतुरो

दक्षिणापथाध्यक्षपदे नियुक्तश्चिरं विजापुरराज्यं नाशयितुमवांच्छत्. परन्तु विजापुराधीशेन सविनयं प्रार्थितो दिल्लीश्वरस्तं तथाकर्तुं न्यषेधीत्. तेन स पित्रेऽदुह्यत्. शिवराजश्च तमवरंगजेबं लोभिनं जानन् महता सावधानेनात्मानं ततो ररक्ष.

अथ दिल्लीश्वरोऽकस्माद्रुग्णो बभूव. जनास्तं मृतमेव मन्यमाना नूतनं दिल्लीश्वरं विधातुं प्रायतन्त. एनां वार्तां निशम्य ते सर्वेऽपि चत्वारः पुत्राः स्वस्वसैन्यान्यादाय स्वस्थानान्निर्गता दिल्लीश्वरसिंहासनं लब्धुं युयुधिरे. तत्र साहसिकोऽवरंगजेबः प्रथमं मुरादस्य पक्षं स्वीकृत्य प्रथमौ स्वज्येष्ठबन्धू घातयामास. ततश्चैकाकिनं मुरादं भोजनसत्कारमिषेण स्वनिवासमानीय बन्दीकृत्य च तमपि अवधीत्. इत्थं सर्वानपि स्वबन्धून् यमागारातिथीन्विधाय दिल्लीश्वरपदमारूढः स पापकर्मा दीर्घद्वेषी अवरंगजेबश्चिरं संकल्पितं विजापुरराज्यनाशमनोरथं पूरयितुं बलाढ्यं सैन्यं प्रेषयामास. तच्च सैन्यं वात्या प्रेरितो दावानल इव जवेन विजापुरराज्यं गच्छन् मार्गे वर्तमानं शिवराजराज्यमपि अबाधत. प्रथमत एव दिल्लीश्वरराज्याक्रमणार्थं किमपि विशेषकारणं प्रतिपालयन् शिवराज इदं विशेषकारणं लब्ध्वा सन्तुष्टः सत्वरं दिल्लीश्वरराज्यान्तर्गतं भूविभागमाक्रमितुं स्वसेनापतिमाज्ञापयामास. सोऽपि स्वामिभक्तो नेताजिपालकरः सर्वं तं विभागं स्वायत्तीकृत्य जुन्नरसुरतप्रभृतीनि धनाढ्यवणिग्जनसमलंकृतानि नग-

राणि लुण्ठन् विपुलां संपदमाजहार. शिवराजसेनापतिश्च यदा प्रबल-गडदुर्गं रुरोध तदा तदधिपः केसरसिंहः समरेऽशेत. परकान्तानि-स्पृहः शिवराजस्तस्य पत्नीं तदीयं देशं प्रापयामास.

( २ )

एवं शिवराजेन समाक्रान्तान् स्वराज्यान्तर्गतभूविभागांस्तथा जुन्नरप्रभृतीनि नगराणि निशम्य स धूर्तो दिल्लीश्वरः परं चुकोप. अवरंगजेबश्च क्रमेण वर्धमानबलाच्छिवराजाद्यवनराज्यस्य भयमाशंक-मानः सर्वथा तं नाशयितुमैच्छत्. प्रकृत्यैवाविश्वस्तः सोऽन्यान् रजपुतक्षत्रियसेनापतीनप्रेषयित्वा स्वमातुलं शास्ताखानं महता सैन्येन समं शिवराजस्य शासनाय प्राहिणोत्. सोऽपि श्रुतशिवराजचातुर्यः सावधानेन प्रथमं औरंगाबादाख्यं दिल्लीश्वरस्य दक्षिणापथराजधानी-नगरं प्राप्य सर्वं व्यवस्थाप्य पुण्यपत्तनं समागन्तुं प्रातिष्ठत. पुण्य-पत्तनं च प्राप्य शास्ताखानः प्रथमतश्चाकणदुर्गमाक्रमितुं प्रावर्तत. तदानीं तस्य दुर्गस्याधिपः फिरंगोजीनरसाळानामा महास्वामिभक्तो महाराष्ट्रवीर एवासीत्. स तु शास्ताखानेन दुर्गं निरुध्य प्रतिबद्धे सर्वस्मिन् व्यवहारे मासद्वयं युयुधे. अन्ते च महता कोपेन दुर्गतटं निर्भिद्य प्रविशति शत्रुसैन्ये धैर्यमवलंब्य युध्यमानः स शत्रुसैनिकधृतः स्वसेवायां स्थातुं प्रार्थयन्तं तं शास्ताखानं तिरस्कृत्य ततो निर्गतः शिवराजं ननाम. सोऽपि कृतज्ञस्तं भूपालगडदुर्गाधिपं चक्रे. शास्ता-

खानश्चैकस्य दुर्गस्य विजयेऽसंख्यजनहानिं तथा बहून् प्रयासानवलोक्य दुःखाकुलः सर्वमपि वृत्तं दिल्लीश्वराय स्वभागिनेयाय निवेद्य पुण्यपत्तने सावधानेन तस्थौ. दिल्लीश्वरश्च सत्वरमेव तस्य साहाय्यार्थं जसवंतसिंहनामानं रजपुतक्षत्रियसेनापतिं सेनाकोशसमन्वितं प्रैषयत्.

शास्ताखानश्च चाराणां मुखात् पुण्यपत्तनान्नातिदूरे सिंहगडनामनि दुर्गे वसन्तं शिवराजमाकर्ण्य परं भीतः कथमपि उवास. तत्र महति शिवराजचरणरजःपरिपूते लालमहालनामनि महासौधे वसन् स तस्य परितश्चतसृषु दिशासु सदैव नग्नखड्गधारिणो यवनसेवकान् स्थापयत्. आज्ञापयच्च स्वसेनाध्यक्षं तथा नगररक्षकाधिकारिणं च 'यदि कश्चन शस्त्रधारी महाराष्ट्रियो दृश्यते तदा स नगरान्निष्कासनीयः नगरप्रवेशाच्च निषेधनीय' इति. शास्ताखानः श्रुताफझुलखानवृत्तान्तो रात्रौ न सुखेन सुष्वाप.

एवं पुण्यपत्तने स्वप्रासाद एव कृतवसतिं तं दिल्लीश्वरसेनापतिमवगम्य कर्तव्यदक्षः शिवराजः स्वमंत्रिणः समाहूय कर्तव्यं विचारयामास. तेऽपि शासनार्थमेव दिल्लीश्वरप्रेषितेन तेन यवनसेनापतिना संध्यभावं पश्यन्तः स्वतस्तस्य दिल्लीश्वरमातुलत्वेन भेदासंभवं चोत्प्रेक्षमाणास्तूष्णीं तस्थुः. अत्रान्तरेऽनन्यया भक्त्या वशीकृता वत्सं मातेव शिवराजं रक्षन्ती भगवती शिवराजशरीरं प्रविश्य जगाद 'वत्स ! चिन्तां मा कुरु. यथा हि अफझुलखानो युक्त्या त्वया पराजितस्तथै-

वायमपि पराजेयः. अहं च त्वां यशस्विनं करिष्यामि इति. तमिमं भगवत्या निदेशं प्राप्य शिवराजः परं संतुष्ट आत्मानं कृतकृत्यमेव मेने.

अथ दूतमुखाच्छ्रुतसकलवृत्तः शिवराजोऽकस्मादाक्रमणेन पराजेतुं तमशक्यं मन्वानो राजनीत्या वर्तितुं प्रारभत. स च प्रथमतो द्वौ विप्रौ प्रेषयित्वा यवनसेनास्थं कंचन महाराष्ट्रियं समुपजापितवान्. अकथयच्च तं श्वस्त्वया विवाहमहोत्सवार्थं यवनसेनापतेराज्ञापत्रं संपादनीयमिति. तेन च तथांगीकृते तौ द्विजवरौ समागत्य सर्वं वृत्तं महाराजाय निवेदयामासतुः. महाभागः शिवराजः कालातिपातेन कार्यहानिमुत्प्रेक्षमाणस्तस्मिन्नेव दिने रात्रौ घनान्धकारसमावृते सकले भूतले सिंहगडदुर्गात् सैनिकसहस्रेण समं निर्गतो मार्गे स्थाने स्थाने वर्तमानेषु विशालवृक्षेषु तैलसिक्तान् कर्पटान् बन्धयन्निभृतं शंखादिवाद्यपूरकानस्थापयत्. आदिशच्च तान् यदा सिंहगडदुर्गगामिनि मार्गे विजयस्य सूचकः शृंगध्वनिर्भविष्यति तदा युष्माभिरिमे कर्पटाः प्रज्वालनीयाः स्वस्ववाद्यानि वादयद्भिः स्वस्वस्थानं प्रति गन्तव्यमिति. एवं सर्वं व्यवस्थाप्य सर्वत्र स्वामिभक्तान् स्वसेवकानभिधाय कृतमार्गरक्षः स शिवराजः केवलं पंचविंशतिमात्रैरेव जनैः समं पुण्यपत्तनमाययौ. अचिरादेव विविधानि वाद्यानि वादयन्ती प्रदीपमालाभिः प्रकाशिताऽश्वारूढवरानुगामिनी विवाहमण्डली प्रवेशद्वारसमीपमाजगाम. तां च यथा-

संकेतं शिवराजः स्वानुचरैः समं प्रविवेश. सा तु विवाहमण्डली स्थानात्स्थानान्तरं गच्छन्ती लालमहालप्रासादादपि पुरतोऽगच्छत्. निशान्धतमसच्छन्ने विभागे तां मण्डलीं विहाय स्वानुचरैः समं स्थितः शिवराजः शीघ्रमेव तस्मिन् प्रासादे कृतप्रवेशः पूरितं वातायनं खनित्वा तेन द्वारेण तदीयं शयनागारं प्राप. शिवराजं नग्नखड्गालंकृतहस्तं शयनागारे प्रविष्टमवलोक्य भीतिविव्हला अन्तःपुरवासिन्यो ललनाः कुरर्य इवोच्चैश्चुक्रुशुः. प्राबोधयंश्च शास्ताखानं. स तु अकस्मादागतं कालमिव भयंकरं शिवराजं वीक्ष्याशनिना मूर्ध्नि ताडित इव नष्टचेतनः कर्तव्यमविभावयन् केवलं पलायनेनात्मानं रक्षितुमैच्छत्. चतुरः शिवराजस्तं पलायनोद्यतमवलोक्य यावत् खड्गेन तं प्रहरति तावदेव स वातायनादधः पतितः केवलं छिन्नांगुलिरभवत्. पितुः साहाय्याय समागतस्तदीयः पुत्रः फत्तेखानस्तु शिवराजखड्गस्य बलिर्बभूव.

एनं महान्तं कोलाहलं निशम्य सर्वेऽपि सैनिकास्तथा सेनामुख्याः शास्ताखानस्य निवासमाययुः. शिवराजोऽपि कृतकृत्यस्तस्मादेव व्याजजनसमुदायान्निर्गतः सिंहगडगामिनि मार्गे पूर्वोक्तरीत्या शृंगध्वनिमकारयत्. तं च समाकर्ण्य पूर्वं स्थापिता मावळेजनास्तांस्तैलकर्पटान् प्रज्वालयन्तः स्वस्ववाद्यानि वादयन्तो विभिन्नया दिशा स्थानान्तरमगमन्. क्रुद्धा यवनसैनिकास्तानेव शिवराजसेनात्वेन मन्य-

माना अनुधावन्तो निबद्धान् तैलकर्पटान् वीक्ष्य खिन्ना यावन्निवर्तन्ते तावत् स्वानुयायिभिः समं शिवराजो निर्विघ्नं सिंहगडदुर्गमाजगाम.

अथ समुदिते भगवति भास्करे रात्रिवृत्तान्तश्रवणेन कुपितं तद्यवनसैन्यं महता संरंभेण सिंहगडदुर्गं रोध्दुमागतं प्रथमतस्तूष्णीं स्थितः शिवराजः शतघ्नीगोलकैस्तथाऽताडयत् यथा मृतबहुलसैनिकं तच्छीघ्रमेव कांदिशीकं बभूव. शास्ताखानश्च स्वसैन्यस्येमां दुर्दशामवेक्ष्य परं खिन्नः सिंहगडदुर्गमपि रोध्दुं नाशकत्. स हि मेने-अहमित्थं सावधानेन वर्तमानोऽपि कपटिना शिवराजेन पराजितस्तन्मदीये सैन्य एव कश्चनाधिकारी कृतघ्नः संवृत्त इति. तं च जसवंतसिंहमेव निश्चित्य सर्वं पराजयवृत्तं दिल्लीश्वराय निवेदयामास. सोऽपि स्वसैन्यस्य पराजयं स्वमातुलस्य कपटेन शासनं जसवंतसिंहस्य कृतघ्नतां निशम्य कुपितो रात्रिंदिवं समतप्यत्. स च स्वात्मानमेव कपटकुशलं मन्यमानः शिवराजस्येदं चातुर्यमालोच्य नितान्तमखिद्यत. स्वयमेव समागत्य शिवराजं शासितुं ववांच्छ, परन्तु काश्मीरविभागे राजद्रोहस्य प्रादुर्भावान्न तथाऽकरोत्. ततश्च मातुलं शास्ताखानं दक्षिणापथाधिकारिपदेऽयोग्यं विभाव्य तं वंगदेशाधिकारिपदे नियुज्य स्वपुत्रमत्र न्ययुंक्त.

( ३ )

एवं मोंगलसैन्यं जित्वा तदधिपं शास्ताखानं हतवीर्यबलं विधाय लब्धप्रभूतयशा भविष्यद्दिल्लीश्वराक्रमणं तर्कयन् प्रथमतः स्वबलं वर्धयामास. तदर्थं च धनमपि संपादयितुं प्रायतत. वाचकाः ? राजनीतिचतुरः शिवराजः 'चारचक्षुषो हि राजानः' इति सम्यग्जानन् स्वीयं चारमण्डलं सर्वमपि कुशलस्वामिभक्तसेवकालंकृतं चक्रे. तन्मुख्यश्च कश्चन बहिरजीनामाऽतिकुशलो नानावेषधारणे पटुः स्पशवर आसीत्. स एव कृत्स्नं शत्रूणां वृत्तं शिवराजाय न्यवेदयत्. धनलाभार्थं दिल्लीश्वरराज्यान्तर्गतानि धनाढ्यानि नगराणि आक्रमितुमिच्छन् शिवराजस्तमपृच्छत्. स तु अन्यानि नगराणि कथयित्वा प्रथमं सुरतनगरं प्रादर्शयत्. वाचकाः ? तदानीं कृत्स्नेऽपि दक्षिणापथे सुरतसदृशं धनाढ्यं नगरं नासीत्. परदेशेभ्यो नानाविधा धनधान्यपरिपूर्णा नौकाः प्रथमं सुरतनगरं प्राप्य धनिकैरक्रीता अन्यत्रागच्छन्. सर्वेऽपि राजपुरुषास्तन्नगरं दिल्लीश्वरस्यापरां राजधानीमवदन्. बहवो हि धनिका नवकोटिस्वामिनो व्यराजन्. शिवराजश्चैतदेव नगरं प्रथममाक्रमणीयमिति निश्चित्य स्वसैन्यं द्विधा विभज्य शत्रुचारान्मोहयित्वाऽकस्मात् सुरतनगरमाचक्राम. सर्वेऽपि पौराः श्रुतशिवराजप्रतापाअपि तदाक्रमणासंभवं मन्यमानाः प्रातरुत्थाय बहिरागताः शिवराजसैनिकानपश्यन्. नगररक्षकश्च पलायनेनात्मानं ररक्ष. ततः शिवराजस्तन्नगरं शनैः शनैर्निर्लुण्ठ्य लब्ध-

धनराशिः स्वराजधानीमाययौ. अस्मिन्नाक्रमणे शिवराजो निष्काणा-मष्टकोटीर्लेभे. तदीयः सेनापतिर्नेताजिपालकरो नानाप्रदेशान्निर्लुण्ठ्य प्रभूतं धनं लब्ध्वा वर्षासमये पुण्यपत्तनमाययौ. नौकाबलाधिपतिरपि शत्रूणां नौका आक्रम्य द्रव्यमहरत्. तदानीमेव समुद्रतीरवर्ति विजापुरराज्यान्तर्गतं बार्सिलोरनामकं नगरं संपन्नमाकर्ण्यानलसः शिवराजः सिंधुदुर्गं गतस्तत एव सर्वं नौकाबलमादाय तन्नगरं लुलुण्ठ. कृत्स्नमपि कारवारनगरपर्यन्तं भूप्रदेशं स्वायत्तीकृत्य भूमिमार्गेण सेनां प्रेषयित्वा स्वयं शीघ्रं गन्तुमिच्छया जलमार्गेण प्रावसत्. सा तु प्रतिकूलवातप्रेरिता नौका शनैः शनैः संचरन्ती बहुना समयेन राजधानीमाययौ. अस्मिन् समये जलप्रवासस्य पराधीनत्वं प्रेक्ष्य शिवराजस्तं सर्वथा हातुं निरणयत्.

( ४ )

एवं सर्वतः प्रभूतं धनं लब्ध्वा स्वराजधानीमागतः शिवराजः स्वमातुलस्य शास्ताखानस्य पराभवेन कुपितो दिल्लीश्वरः पुनरपि शिवराजराज्याक्रमणाय कृतनिश्चयोऽतिपराक्रमिणौ, अगणितसेनाबलसमन्वितौ, अपारकोशभारसहितौ जयसिंहदिलेरखाननामानौ द्वौ सेनापती प्रेषयामासेति वृत्तमशृणोत्. तत्र जयसिंहो हि परमशूरो रजपुतक्षत्रियः प्रसिद्धस्य जयपुरराज्यस्य स्वामी महान् बलिष्ठः सकलगुणसंपन्नः प्रधानमेव आसीत्. दिलेरखानस्तु यवनत्वेन दिल्लीश्वरस्य

विश्वासपात्रं. वस्तुतस्तु शिवराजशासने जयपुराधिप एकाक्येव पर्याप्त-स्तथापि कपटी अवरंगजेबः स्वप्नेऽपि स्वामिभक्तेष्वपि आर्यसेनापतिषु नैव व्यश्वसीत्. अतएव सोऽस्मिन् कर्मणि सहायमिषेण दिलेरखानं न्ययुंक्त. स तु सर्वमेव जगदात्मवद्विश्वासघातकं मेने. अस्तु. तौ च यवनसेनापती सावधानेन नर्मदामुत्तीर्य औरंगाबादनगरं गत्वा सर्वं व्यवस्थाप्य शिवराजराज्ये कृतप्रवेशौ पुरंदरदुर्गं रुरुधतुः. तस्य दुर्गस्यावरोधे दिलेरखानं नियुज्य राजा जयसिंहः स्वयं सिंहगडदुर्गमरुगत्. कांश्चिदन्यान् सेनानायकान् रायगडदुर्गस्य रोधार्थं प्रैषयत्. शिवराजश्च चारमुखेन सर्वमिदमवगच्छन् मनस्यकरोत्. अयं च परमशूरः स्वामिभक्तो जयसिंहोऽपारसेनासागरसमन्वितः कदापि स्वमनोरथं सफलमकृत्वा न स्थास्यति. धर्माभिमानोद्बोधनेन वशीकारे तु महंमदीयधर्मानुयायी दिलेरखानः प्रतिबंधकः. सदैव यशस्विनि अस्मिन् जयसिंहे राजनीतिचातुर्यस्य संभव एव न. तस्मात् कथमियमापत्संतरणीयेति. विचिन्त्य चैवं स स्वीयममात्यमण्डलं कर्तव्यमपृच्छत्. राजनीतिप्रवीणमपि तद्युद्धेन जयमशक्यमवदत्. भगवती जगदंबा तदानीमेव प्रकटीभूय जगाद 'वत्स! शिवराज ! अयं महाभागः पुण्यशीलः. नानेन सह विगृह्य त्वया जयो लब्धुं शक्यः. तत् संधिं विधाय कृतकृत्यो भवेति. प्रकृतिमापन्नः शिवराजस्तं देवीसंदेशमनुवाच्य सन्तुष्टस्तथैव कर्तुं निश्चयमकरोत्.

अथ जयसिंहोऽपि प्रकृत्या कुलीनः सनातनधर्माभिमानी दुर्दैवतो धृतयवनसेवोऽपि सहृदयो महाराजं स्वराज्यस्थापनार्थं प्रयतमानं शिवराजं वीक्ष्य निभृतानन्दः सादरं दूतद्वारा पत्रं प्रेषयामास. किंच— जयसिंहः कृतानेकसंग्रामोऽपि दुर्गमसह्याचलशिखरवर्तीनि तानि तानि दुर्गाण्यवलोक्य मनस्यकरोत्—अहो ? एतेषां दुर्गाणां दुर्गत्वं. एतानि शक्रेणाऽपि जेतुमशक्यानि. अहं चाजन्मनो युध्यमानः कदापि पराजयमलिनमुखो नाभवम्. यदि चास्मिन् समये यशोभाक् न भविष्यामि तदा महत्कष्टं. तस्माद्यदि संधिं विधाय शिवराजविजययशो लभ्यते तदा वरमिति. अस्तु. तच्च पत्रमित्थं—महाभाग ? शिवनृपते ? अयं दिल्लीश्वरोऽवरंगजेबोऽधुना महाप्रतापी सकलानपि राज्ञ ऐश्वर्येणातीत्य वर्तते. कृत्स्नमार्यावर्तं तदधीनं. नैतावदेव किंतु अफगाणिस्थानप्रभृतय आर्यावर्तस्य बहिर्भूता अपि देशास्तस्य वशंगताः. अतएव त्वया तेन समं विरोधो न करणीयः. दुर्बलेन बलवतो विरोधो न करणीय इति खलु राजनीतिः. तस्मात् सर्वानपराधान् स्वीकृत्य संधिरेव विधेयः. त्वदनुकूलं संधिं विधातुमहं साहाय्ययिष्यामि. यथैव स्वामित्वेन दिल्लीश्वरो मे मान्यस्तथैव सजातीयत्वेन त्वमपि. तत्ते किमभिमतमिति निवेदयेति.

शिवराजश्चेदं पत्रं लब्ध्वा संमुदितस्तस्य प्रत्युत्तरं लिखित्वा रघुनाथपंतनामानं परमकुशाग्रमतिं दूतं प्रेषयामास. जयसिंहस्तु समागतं शिवराजदूतमाकर्ण्य सन्तुष्टः सत्कृत्य तं शिवराज-

प्रेषितं प्रत्युत्तरं स्वयं पपाठ. तच्चेत्थं—सार्वभौमदिल्लीश्वरसेवकाः ! जयपुराधीशाः ! समधिगतं युष्माकं कृपापत्रं. परमसन्तोषः संवृत्तः. यथा युष्माभिः प्रतिपादितं तथैव दिल्लीश्वरो महाप्रतापीत्यत्र न ममापि संदेहः. किंतु सर्वत्र भारतवर्षे सनातनधर्मस्य नाशं कुर्वतां यवनानां प्राबल्यं वीक्ष्यागत्या मयैष पंथा गृहीतः. जयपुराधीशाः ? प्रतिदिनं सहस्रशो गावो निहन्यन्ते ? असंख्या आर्यमहिला दासीक्रियन्ते ? देवालयान्नाशयित्वा तत्रस्थाः प्रतिकृतयश्चूर्णीक्रियन्ते ? तदेतद्वीक्ष्य कस्य वा सनातनधर्मानुयायिनश्चेतो व्याकुलं न भवेत् ? इदं न केवलं ममैव कर्म किंतु सर्वेषां सनातनधर्मानुयायिनां. यदि च सर्वे सनातनधर्मानुयायिन एव यवनानां सहाया भूत्वा स्वधर्मं नाशयिष्यन्ति स्वमातृभूमिं च पारतंत्र्यनरके स्थापयितुमिच्छन्ति तदा कः खलु रक्षकः ? तस्मात् सर्वथा स्वामिभक्तावेव मनो न देयं. अहं च न विशेषज्ञस्तथापि स्वधर्मप्रीतिस्तथा मातृभूमिभक्तिः सत्यमेव स्वामिभक्तिमतिक्राम्यत इति जानामि. यतः स्वामिनां तत्तत्कालानुरोधेन भिन्नतया तद्भक्तिरपि भिद्यते. स्वधर्मस्तथा मातृभूश्च कदापि न भिद्येते. वयोवृद्धा ज्ञानवृद्धाश्च यूयं. बालेन मया किं बोधनीयं. सर्वथा यद्योग्यं तदेव करणीयमिति.

तदिदं गूढार्थपरिपूर्णं प्रत्युत्तरमनुवाच्य मुदितः स जयपुराधीशो रघुनाथपन्तं सर्वं मुखेनैव कथयित्वा तं शिवराजमानेतुं कथयामास. परमस्वामिभक्तश्चतुरो रघुनाथपन्तो रहसि जयसिंहमेकाकिनं लब्ध्वा

शिवराजप्राणान् रक्षितुं वचनं ययाच. सोऽपि निष्कपटमतिस्तथा प्रतिज्ञाय जगाद 'यद्यपि वयं दिल्लीश्वरं यवनं सेवामहे तथापि अस्माभिरार्याणां शीलं न त्यक्तं. यथा चेमे यवना एकमुक्त्वाऽन्यदेव कुर्वन्ति तथा नैव वयं रजपुतक्षत्रियाः. किंबहुना यथैव मे पुत्रः किरतसिंहस्तथैव शिवराजोऽपि इति.' इदं च तदीयं वचनं लब्ध्वा निर्गतो रघुनाथपन्तः स्वामिने सर्वं निवेद्य जयसिंहनिवासगमनाय प्रार्थयत. शिवराजोऽपि तथैव विधातुं मतिं चक्रे.

अत्रान्तरे दिलेरखानो जयसिंहः शिवराजेन संधातुमिच्छतीति ज्ञात्वा 'इमे आर्याः परस्परं मिलिता' इति मनसिकुर्वाणो जयसिंहमवदत्. भवद्भिः स्वमत्या शिवराजेन समं संधिर्न विधेयः किंतु तदाशयं ज्ञात्वा दिल्लीश्वरो बोधनीयः. स यथाऽऽज्ञापयेत्तथा कर्तव्यं. अहं चाचिरादेव पुरंदरदुर्गं ग्रहिष्यामि. भवद्भिश्च सिंहगडदुर्गमाक्रमणीयमिति. राजनीतिचतुरः स जयसिंहो यवनस्वभावं सम्यग्जानन् शनैस्तमवदत्. 'शिवराजः स्वयमेवागत्य दिल्लीश्वरस्य सामन्तो भवितुमिच्छतीत्यधुना विग्रहो न योग्यः. शिवराजेन यानि खलु दुर्गाण्यस्मद्राज्यतो गृहीतानि तेषां ग्रहणेनैव वयं कृतकृत्या भविष्यामः. यदि च सर्वेषां दुर्गाणां स्वायत्तीकरणार्थं युष्माकं मनोरथः स्यात्तदा सोऽशक्य इति निःसंदेहं ज्ञातव्यं. इमानि च सह्याचलस्य शिखरेषु विराजमानानि स्वामिभक्ततदधिपपालितानि

शक्रेणाऽपि ग्रहीतुमयोग्यानि तदा किमुत मानवेन. ततो दुराग्रहं त्यक्त्वा संतोषेण संधिं विधाय दिल्लीश्वरस्य यशो वर्धयामह इति.

एवं भूयोभूयः प्रतिबोधितोऽपि स दिलेरखानो जयसिंहस्य वचोऽनभिनंद्य पुरंदरदुर्गं स्वायत्तीकर्तुं यदा प्रायतत तदा च जयसिंहः केवलं ताटस्थ्येनावर्तत.

शिवराजश्चेदं सर्वं वृत्तं गूढचारद्वारा विदित्वा क्रुद्धः पुरंदरदुर्गाधिपं मुरारबाजिं धैर्येण योध्दुमादिदेश. स तु मूर्तः पराक्रमः स्वामिभक्तवरो नरश्रेष्ठः स्वामिनो नियोगं शिरसा स्वीकृत्य समागच्छन्तीं शत्रुसेनां दूरादेवावेक्ष्य शतघ्नीगोलकप्रहारेण तां जर्जरितामकरोत्. स च यवनसेनापतिराकाशादिव तस्मात् पुरंदरदुर्गादागच्छतो लोहगोलकानालोक्य स्वसैनिकांश्च प्रतिक्षणं विरलीभवतः क्षीणोत्साहोऽपि धैर्यमवलंब्य योध्दुमारभत. सर्वतः सेनानिवेशान् स्थापयित्वा गमनागमने प्रतिषेधयामास.

एवं दुर्गमवरुध्य स्थितस्य यवनसेनापतेर्बहुषु दिनेषु व्यतीतेषु सत्सु पूर्ववदेवोत्साहेन युध्यमानान् दुर्गवासिनो मावळेवीरानवलोक्य क्रुद्धः स दिलेरखानः कपटमाचरितुं कृतमतिर्निभृतं पुरंदरदुर्गस्यैकं विभागं स्फोटकद्रव्यं प्रज्वाल्य स्फोटयामास. स्फोटनिर्मितेन मार्गेण सहस्रशो यवनसैनिका उपर्यागच्छन्. तैः समं तत्रैव समेताः सर्वेऽपि

दुर्गवासिनोऽयुध्यन्त. अचिरादेव मावळेसैनिकैः पराजितान् पलाय-मानान् यवनसैनिकान् प्रेक्ष्य कोपान्धः स दिलेरखानः स्वयमेवाग्रे-भूत्वा धानुष्कैः शरवृष्टिं कारयामास. स्वयमपि धनुर्गृहीत्वा युयुधे. मुरारबाजिस्तु तदानीं कालपुरुष इव यवनसैनिकान् संहरन् स्वदेह-मपि क्षुद्रं मेने. ततो बहुभिर्यवनसैनिकैराक्रम्य छिन्नेऽपि तदीये चर्मफलके वस्त्रेणैव सव्यं हस्तं वेष्टयित्वा खड्गप्रहारान् परिहरन् प्राहरत्.

तदानीं तु तस्य मुरारबाजीप्रभोः शौर्यं स्वामिभक्तिं च समवलोक्य यवनसेनापतिः सानन्दं तमवदत्. 'यदि त्वं दिल्लीश्वरस्य सैनिको भविष्यसि तदाऽहं तुभ्यमुत्तमं पदं दत्वाऽवश्यमेव सत्कारयि-ष्यामीति. मुरारबाजिप्रभुस्तस्येदं वचनमाकर्ण्य कोपेन परीतचेताः सावेशं जगाद. रे रे यवनसेनापते! अस्माकं पुण्यश्लोकस्य शिवरा-जस्य मुखान्निर्गतमेकमपि अभिनन्दनाक्षरं कृत्स्नस्य भारतवर्षराज्यस्य प्रदानादपि समतिरिच्यते. स्वल्पस्यैहिकसुखस्य लोभेन स्वामिघातं यवना एव कुर्वन्ति न महाराष्ट्रियाः. यदा मदीया अवशिष्टा इमे बान्धवा अस्मिन् समरे पतितस्य मे कण्ठं गृहीत्वा प्रातः संस्मरणी-यस्य भूतलावतीर्णस्य शिवस्येव शिवराजस्य चरणकमलयोरर्पयिष्यन्ति तदाऽहं धन्यो भविष्यामि' इति. उक्त्वा चेदं तमेव दिलेरखानमाच-क्राम. प्रावर्तत पुनरपि युद्धं. दिलेरखानश्च तं कालमिव स्वसैन्यस्य नाशकं निरीक्ष्य क्रुद्धस्तीक्ष्णेन बाणेन तं कण्ठे प्राहरत्. प्रथमत एव

सततं विहितेन युद्धेन क्षीणः स स्वामिभक्तश्रेष्ठो मुरारबाजिः शिवराजं मनसा प्रणम्य समरभूमावशेत. छिन्नेऽपि तदीये मस्तके तदीयं कबंधमेवासंख्यान् यवनान् यमालयं प्रापयामासेति कवयः कथयन्ति. अस्तु. एवं पतितं स्वनायकं वीक्ष्याऽपि अनुपहतोत्साहास्ते शिवराजसैनिका दुर्गद्वाराणि पिधाय सोत्साहमयुध्यन्त.

दिलेरखानस्तु तान् पुनरपि युध्यमानान्विलोक्य कोपाकुलः स्वोष्णीषं मस्तकादवतार्य 'यदाऽहमिदं दुर्गं जेष्यामि तदैवोष्णीषं धारयिष्यामि' इति प्रतिजज्ञे. तदानीमेव जयसिंहेन सिंहगडविजयाय प्रेषितः सेनापतिरपि शिवराजसेनया पराजितः पलायमानः कथमपि स्वावासमाजगाम. एवं सर्वतः शिवराजसेनया भूयोभूयो निभृताक्रमणैरुद्वेजितः स जयसिंहो दिलेरखानमवदत्. शिवराजेन समं संधिं विधायैवेयमापत्संतरणीया नान्यथा. यद्येकस्य दुर्गस्य ग्रहणायैतावतः सैन्यस्य क्षयस्तदा सह्याचलोत्तुंगशिखरस्थानां सर्वेषां दुर्गाणामाक्रमणं कथं भवेत् ? शिवराजश्च प्रथमत एव भीतः संधातुं प्रार्थयत. मयाऽपि एतज्जानता स्वीकृता तदीया प्रार्थना. भवद्भिरेव प्रत्याख्यातः सः. इदानीं न जाने किं संधिमिच्छति नवेति. दिलेरखानोऽपि अपगतबलमदः सत्यमेव तदीयं सर्वं भाषणं मन्वानः करुणया प्राह—यदि शिवराजः पुनरपि समागत्य संधातुमिच्छेत्तदा यथा कथंचित् संधिर्विधेय एव. अस्य दुर्गस्य विजयाय मया शपथः कृतः. तदिदं दुर्गमस्मद्राजवैजयन्तीभूषितं विधाय पश्चात्तदधीनं कर्तव्यमिति. एवं

प्रकृतिमापन्नं तं यवनसेनापतिं समालोक्य चतुरो जयपुराधिपः शिवराजं स्वनिवासमाह्वयत्. शिवराजोऽपि महता सैन्येन परिवृत्तो जयसिंहस्य निवासं गत्वा तेन सत्कृतो दिलेरखानमपि संतोषयामास. तदानीं दिलेरखानः पुरंदरदुर्गं राजवैजयन्तीसमलंकृतं विधातुं विज्ञापयामास. शिवराजोऽपि तं वृथाऽभिमानिनं ज्ञात्वा प्रकटमाह 'यवनसेनापते? एकेनैव पुरंदरदुर्गेण किं? यावन्ति सर्वाणि मे दुर्गाणि तावन्ति दिल्लीश्वरवैजयन्तीसंभूषितान्येव भवन्तु. इति. निगद्य चैवं स सत्यवचनः शिवराजस्तदानीमेव स्वसेवकमाहूय पुरंदरदुर्गाधिपं दुर्गप्राकारे दिल्लीश्वरराजवैजयन्तीं स्थापयितुमादिदेश. स्वामिनियोगपालनतत्परः स तस्मिन्नेव क्षणे तां राजवैजयन्तीं तत्र स्थापयामास. तेन सन्तुष्टः स दिलेरखानः 'सन्तुष्टोऽहं युष्माकं सत्यवचनेन. जयपुराधिपतिना सह संमंत्र्य संधिनियमा विधेयाः, अहं तु तत्रानुकूल एव. वस्तुतस्तएव मुख्या वृद्धाश्च. अहं तु केवलं तेषां साहाय्यार्थं प्रेषितोऽस्मीति जगाद. शिवराजोऽपि तावतैव कृतकृत्यो जयपुराधिपनिवासमागत्य तस्मै सर्वं निवेदयामास.

( ५ )

अथ जयसिंहः शिवराजानुमत्या संधिमीदृशं व्यधात्. शिवराजेन यावान्निजामशाहीराज्यान्तर्गतो भूविभाग आक्रान्तः, स तत्रस्थैर्दुर्गैः समं दिल्लीश्वराय समर्पणीयः. तथा तत्रस्थान्येव द्वादश दुर्गाणि

समं भूविभागेन दिल्लीश्वरेण शिवराजाय प्रदत्तानीति मत्वा शिवराजेन ग्राह्याणि. सर्वमपि राज्यं दिल्लीश्वरेण प्रदत्तमिति मत्वा तदाज्ञया वर्तनीयं. शिवराजस्य पुत्राय दिल्लीश्वरेण पंचसहस्रसादिनामाधिपत्यं देयं. विजापुरराज्याच्चतुर्थांशो ग्राह्यः, परन्तु तदर्थं शिवराजेन विजापुरराज्याक्रमणाय गच्छन्ती दिल्लीश्वरसेना साहाय्ययितव्येति. इमं संधिं दिल्लीश्वरोऽवरंगजेबोऽनुमुमुदे. शिवराजोऽपि एनं संधिं प्रमाणीकृत्य विजापुरराज्याक्रमणे सादिनां सहस्रद्वयं तथा पदातीनामष्टसहस्राणि गृहीत्वा साहाय्यं चक्रे. दिल्लीश्वरसेनापतिः समये समये विजापुरराज्याक्रमणे प्रकटीभूतं शिवराजसेनाशौर्यं वीक्ष्य सन्तुष्टः सर्वं वृत्तं दिल्लीश्वराय निवेदयामास. सोऽपि धूर्तशिरोमणिः शिवराजायागणितं द्रव्यं पारितोषिकमिषेण वितरन् बहुतरं प्रशशंस. अन्ते च–यदि यूयं राजधानीमागमिष्यथ तदाऽहं युष्मान् संमानयेत्वा श्रेष्ठपदवीं प्रापयिष्यामि' इति लिलेख. अस्मिन्विषये हृष्टो जयसिंहो दिल्लीनगरगमनायान्वमोदत. जगाद च–मम पुत्रो रामसिंहो दिल्लीश्वरसंनिधावेव वर्तते स सर्वं करिष्यति. युष्माभिः सर्वथा संदेहं विहाय दिल्लीनगरं गत्वा दिल्लीश्वरो द्रष्टव्य' इति. शिवराजोऽपि अस्मिन्विषये मंत्रिमण्डलं तथा मातरं प्रष्टुमिच्छुः स्वराजधानीमाययौ.





## १३ दिल्लीनगरगमनं, तत्र कारागारवासश्च.

१ पश्चाद्राज्यव्यवस्था.

२ मार्गे बहुमानलाभः

३ दिल्लीपतेःकापट्यं.

४ बन्दिवासः.

( १ )

एवं दिल्लीनगरं जिगमिषुः शिवराजः स्वमंत्रिमण्डलमेकत्रीकृत्य कर्तव्यमपृच्छत्. ते सर्वेऽपि मंत्रकुशला मंत्रिण आहुः–दिल्लीश्वरवचसि विश्वस्य दिल्लीगमनं स्वामिचरणानामस्मभ्यं न रोचते. अयमवरंगजेबो धूर्तनायकः कथं स्वबन्धून् घातयामास, कथं च पितरं कारागारे स्थापयित्वा हतवानिति सार्वजनीनं. स्वकीयेषु तथा परकीयेषु यो स्वप्नेऽपि न विश्वसिति. कथं तस्मिन् मारात्मके विश्वासघातके विश्वस्य स्वामिपादा गच्छन्तीति न जानीमहे. कृतघ्नेऽपि विश्वसनं तत्वविदां शोभते नतु राजनीतिविदां. स तु महंमदीयधर्मानुयायी सर्वदा सनातनधर्मं द्वेष्टि. तदा तस्योद्धारतत्परान् स्वामिपादान् द्वेष्टीति किमु वक्तव्यं. तस्मादयुक्तमेतद्यवनराजधानीगमनमिति.

शिवराजस्तु स्वामिभक्तानां मंत्रिणां स्वनिष्ठामवलोक्य सन्तुष्टस्तान् शनैः शनैरवदत् 'मंत्रिवराः ! यथा युष्माभिरुक्तं तथैव सर्वमहं जानामि. तथापि साम्प्रतं दिल्लीगमनमावश्यकमेव. यदि जयसिंहस्य वचोऽनादृत्य दिल्लीगमनं निराकुर्यां तदा जयसिंहस्य मय्यविश्वासः स्यात्. स च जातमपि संधिं विहाय त्वरितमेव युध्येत. तच्चानिष्टम्. किंच अधुना स्वराज्यवृध्यर्थं प्रयतमानैरस्माभिः प्रायो विजापुरराज्यमाक्रान्तकल्पमेव. सर्वेषु भारतयवनराज्येषु दिल्लीश्वरराज्यमेव प्रबलं. तदपि यथाशक्ति युक्त्या वा शक्त्या वा स्वायत्तीकरणीयमेव. तत्र च दिल्लीश्वरसामर्थ्यापेक्षयाऽस्मत्सामर्थ्यमल्पमित्यपि यूयं जानीथैव. तत् कथं खलु दिल्लीश्वरराज्यमनाक्रम्य स्वराज्यवृद्धिः कर्तुं शक्येति यूयमेव कथयत. अहं तु मन्ये यथा दक्षिणापथे वयं स्वराज्यस्थापनार्थं प्रयतामहे तथैव राजस्थानविभागेऽपि कश्चन सनातनधर्मानुयायी स्वतंत्रराज्यस्थापनोत्सुकः स्याच्चेत्तदा वयं तं साहाय्ययिष्यामः. अनेन दिल्लीश्वरस्य सामर्थ्यं द्विधा विभक्तं सुजयं भवेत्.

अपि च जयसिंहसदृशा बहवो हि रजपुतक्षत्रिया दिल्लीश्वरेण जितास्तदीयसामन्ततां भजमानास्तं सेवन्ते. तानपि उत्तेजयित्वा दिल्लीश्वरविरोधिनः करिष्यामस्तदाऽपि अस्मत्कार्यं सुकरं भवेत्. अपरं च यदि विश्वासघातेन मां दिल्लीश्वरः प्रतिबन्धे स्थापयिष्यति प्राणैर्वा वियोजयिष्यति तदा सर्वेऽपि बलिष्ठा जयसिंहप्रभृतयः क्षत्रियश्रेष्ठास्तदसहमाना अवश्यमेव दिल्लीश्वरं नाशयिष्यन्ति.

भवन्तश्च सर्वे राज्यकार्यकुशलाः कमप्येकमग्रेसरं विधाय संपादितं स्वराज्यं वर्धयिष्यन्ते. मम च कर्तव्यं स्वराज्यस्थापना तथा गोब्राह्मणानां प्रतिपालनमेवेति सर्वविदितं. तच्चैवंविधयाऽपि संभवति.

अन्यच्च-वयं विजापुरराज्यस्य सांनिध्यतो ज्ञातवृत्तान्ता योध्दुं न बिभीमः. परन्तु दिल्लीनगरस्य विप्रकृष्टत्वेन परमैश्वर्यश्रवणेन च दिल्लीश्वरेण योध्दुं सहसा न प्रभवामः. अनेन दिल्लीगमनेनायमपि संशयो विनश्येत्.

मंत्रिणः! सर्वथा साम्प्रतं दिल्लीनगरगमनं तु प्राप्तमेव. स च कपटी दिल्लीश्वरो मां प्रतिबंधे स्थापयेन्न तु प्राणैर्वियोजयेत्. यतस्तथाकरणे तस्यैव हानिः स्यात्. प्रतिबन्धे च स्थापितोऽहं यया कयाऽपि युक्त्या ततो निर्गत्य समागमिष्यामि. पश्चाच्च मद्वृतं जानन्तो भवन्तो यथोचितं वर्तन्तामिति.

तदिदं शिवराजस्य भाषणं तथा दिल्लीनगरगमने निश्चयं च विलोक्य तूष्णींस्थितास्ते सर्वे मंत्रिवरा राज्यकार्याणि कर्तुं प्रतिजज्ञिरे. अथ शिवराजः स्वस्य पश्चाद्राज्यव्यवस्थां विधातुकामः 'मोरोपन्तपेशवा,अण्णाजिदत्तोसुरनवीस,निळोसोनदेवमुजुंमदार'नामधेयान् त्रीन् मुख्यान् मंत्रिवरान् मुख्यान्विधाय तदाज्ञया वर्तितुं सर्वानादिदेश. प्रतापरावगुजरप्रभृतीन् स्वकीयान् जिजादेवीप्रभृतीनां स्वसंबंधिनां पालनार्थं कथयामास. सर्वेभ्योऽपि दुर्गाधिपेभ्य इमां व्यवस्थां लेख-

द्वारा निवेदयामास. ततश्च स्वेन समं दिल्लीनगरं नेतुं परमविश्वासपात्राणि स्वामिभक्तान् सेवकान् जग्राह. तेषु विशेषतो राज्यकार्यकुशलाः 'निराजिशहाणे,त्रिंबकजीडबीर,दत्ताजित्र्यंबक,माणकोसबनीस, नामानस्तथा वीराः सैनिकाः 'हिरोजिफर्जंद,राघोमित्र,दावलजीगाडगे,जिवामहाल्या,नामका आसन्.

शिवराजः स्वेन समं शूराणां मावळेसैनिकानां सहस्रद्वयं जग्राह. एवं सर्वं व्यवस्थाप्याऽपि शिवराजः स्वाधिकारिणः स्वाज्ञां कथं परिपालयन्तीति ज्ञातुकामोऽतिदूरवर्तिनमेकं दुर्गाधिपं परीक्षते स्म. एकदाऽकस्मादेव मध्यरात्रे तस्य दुर्गस्याधस्तात्समागत्य दुर्गद्वारपालमवदत् 'शत्रुश्च मामनुधावंस्त्वरितमागच्छति, अहं च कतिपयसेवकसमन्वितोऽस्मि. तद्द्वारमुद्घाटयितुं दुर्गाधिपं वदेति. तेन तथैवोक्तः स दुर्गाधिपः समागत्य जगाद. रात्रौ केनाऽपि प्रसंगेन दुर्गद्वारं नोद्घाटनीयमिति तत्रभवतः शिवराजस्याज्ञाऽस्ति. तत् प्रभातकालपर्यन्तं भवद्भिर्दुर्गद्वारस्य संनिधावेवावस्थातव्यं. अहं च शत्रुमधोवर्तिना सैन्येन रोत्स्यामि. अल्पमवशिष्टा रात्रिरिति. ततः सकोपं द्वारोद्घाटनाय ब्रुवाणेऽपि शिवराजे स दुर्गाधिप आप्रभातं दुर्गद्वारं नोदघाटयत् . नियते समये द्वारमुद्घाट्य हस्तौ मुकुलीकृत्य स दुर्गाधिपः शिवराजं प्रणिपत्य प्राह–अयं जनो दण्डनीय इति. गुणज्ञः शिवराजस्तदीयं राजाज्ञापरिपालनदाक्षिण्यमवलोक्य सन्तुष्टः पारितोषिकं वितीर्य प्रशशंस.

एवं सर्वां व्यवस्था विधाय निश्चिन्तः शिवराजो नियते समये सकलशुभलक्षणसमन्विते दिल्लीनगरं गन्तुं निर्गतोऽपरां भगवतीमिव मातरं जिजादेवीं प्रणिपत्यानुज्ञामयाचत. सा च दूरगामिनं स्वपुत्रं निरीक्ष्य स्नेहविव्हलाऽपि राज्यकार्यगौरवं जानन्ती विसर्जयामास. ततश्च भगवतीं प्रणम्य स्वपत्नीं सईदेवीमापृच्छ्य शिवराजः प्रातिष्ठत.

( २ )

कपटी दिल्लीश्वरोऽवरंगजेबः शिवराजं स्वस्मिन्विश्वस्य समागच्छन्तं समाकर्ण्य परं मुदितमनास्तत्स्थानाधिकारिणः प्रति 'युवराजवत् सत्करणीय आदरणीयश्च शिवराजः' इति आज्ञापयामास. तेन यत्र यत्र शिवराजोऽगच्छत्तत्रतत्र सर्वे एवाधिकारिणस्तं सादरमसेवन्त. सैनिका[illegible] संतोषमापुः. शिवराजश्च प्रकृत्यैव महामानधन आसीत्तेन स [illegible] नाभ्यसूत. एकदा शिवराजो दिल्लीनगरं गच्छन् मार्गे [illegible] जयपुराधीशं जयसिंहं द्रष्टुमिच्छुस्तन्नगरमाययौ. तस्मिन्दिवसे शिवराजः स्वागमनं दूतमुखेन नगराधिपाय न्यवेदयत्. परन्तु [illegible] स यवनः स्वयं शिवराजं सत्कर्तुं नागतः स्वस्य भ्रातुष्पुत्रं प्रेषयामास. शिवराजोऽपि तदीयमभिप्रायं जानन् सहसा जयसिंहस्य निवासमेवाजगाम. तत्र च स्वतंत्रराजवत्तेनादृतं तं शिवराजमवेक्ष्य स लज्जितो भीतः क्षमां याचित्वा सविशेषमादरयामास.

एवंक्रमेण स्थाने स्थाने दिल्लीश्वरनियुक्तैस्तत्तत्प्रान्ताध्यक्षैर्विहितान् सत्काराननुभूय प्रतापश्रवणेन द्रष्टुमागतान् जनान् दर्शनदानेनानुगृण्हन् सर्वेषां यवनप्रजाजनानां परिस्थितिं साक्षात्कुर्वन् सकलार्यजनहृदयवासि स्वविषयकं प्रेम परीक्षमाणः शिवराजः क्रमेण दिल्लीनगरसमीपमाजगाम.

( ३ )

शिवराजं समीपमागतं दूतमुखेन विज्ञाय स कपटी दिल्लीश्वरो जयसिंहस्य पुत्रं तथा कंचन साधारणं [illegible] शिवराजं सत्कर्तुं प्रेषयामास. शिवराजश्च स्वैश्वर्यस्यापि अनुरूपं [illegible] सत्कारमवेक्ष्य खिन्नः क्रुद्धो रामसिंहं तथाऽकथयत्. परन्तु रामसिंहो दिल्लीश्वरस्य स्वभावं जानन् शिवराजं कथमपि [illegible]मास.

अथ नियतं प्रासादं गत्वा निर्वृत्तस्नानभोजनः शिवराजः समं रामसिंहेन नानावार्तालापांश्चक्रे. तत्र जातविश्वासः कोऽपि शिवराजमपरं स्वबन्धुमिव मन्यमानः शनैः रहसि 'राजसभायां कीदृशं मानं यूयमपेक्षध्वे' इति पप्रच्छ. सरलमतिः शिवराजः 'अहं च यद्यपि बलहीनो दिल्लीश्वरश्च महैश्वर्यसंपन्नस्तथापि नाहं तस्य सेवकः! अहमपि दिल्लीश्वर इव स्वतंत्रं स्वराज्यं परिपालयामि. तदावयोः संमेलनं साम्येनैव भाव्यं. नहि सिंहबालकं गजापेक्षया हीनबलमपि किं सिंहत्वेन न व्यपदिशन्ति? इति प्रत्युवाच. रामसिंहस्तु तदीयमिदं

भाषणमाकर्ण्य सन्तुष्टो विस्मितश्चावदत्–महाराजाः? सर्वमिदं सत्यं. सत्यमेव यूयमस्माद्दिल्लीश्वराच्छ्रेष्ठा इत्यत्र न कस्याऽपि संशयः. तथापि कूटमतिर्दिल्लीश्वरस्तथाऽऽत्मानं न मन्यते. यद्यपि युष्मद्राज्यं युष्माभिः स्वपराक्रमेणार्जितं न पुनर्दिल्लीश्वरेणेव कपटेन वा छलेन वा पितृनाशेन वा ? तस्माद्यूयमवश्यमेव सन्माननार्हाः. परन्तु शठो दिल्लीश्वरोऽवरंगजेबः कदापि तन्नांगीकुर्यात्. तस्मात् कथमिदमुपपत्स्यत इति भवद्भिरेव विचारणीयमिति. शिवराजोऽपि रामसिंहस्येदं भाषणं सत्यं मन्वानः खिन्नो न किंचिदपि प्रत्युवाच.

अथ कुमारो रामसिंहो दिल्लीश्वरसमीपं गत्वा शिवराजस्य कुशलं निवेद्य दर्शनार्थं समयमयाचत. स तु धूर्तः 'श्वोऽस्ति राज्यस्थापनादिवसस्तत्त्वं शिवाजिं गृहीत्वा तत्रागच्छ' इत्युवाच. रामसिंहस्तु 'विजापुराधीश्वरेण सह यादृशं मेलनं बभूव तादृशमेव शिवराजेन समं विधेयमिति विज्ञप्य विरतः कृतसाकूतस्मितेन तेन विसृष्टः समागत्य शिवराजाय सर्वं वृत्तं निवेदयामास. शिवराजश्च प्रभातसमये स्नात्वा विहितनित्यक्रियो नियतसमये कतिपयशूरसैनिकसमेतो राजसभां जगाम.

दिल्लीश्वरोऽपि तस्मिन्दिने सभाध्यक्षमाहूय सावधानेनावस्थितये तमादिश्य सर्वानपि नागरिकप्रमुखान् राजसभार्थमाह्वयत्. परितो राजसिंहासनं गृहीतनग्नखड्गान् परमविश्वासशालिनः प्रधाना-

धिकारिणो व्यवस्थयाऽस्थापयत. स्वयमपि सर्वं शिरस्त्राणादिकं देहसंरक्षकं साधनजातं बिभ्रदपूर्वमुक्ताहीरकादिरत्नानां मालाभिरात्मानं भूषयामास. एवं महतोत्सवेन राजसभां प्रविश्य सर्वैः प्रजाजनैर्नमस्कृतो हीरकमयं सिंहासनमध्युवास दिल्लीश्वरः. तदानीमेव कुमारेण रामसिंहेन सममागच्छन्तं मूर्तैरभिमानैरिव देशभक्तैर्मावळवीरैरनुगतं, शुभ्रवाजिसमारूढं, आजानुबाहुं, पुष्कराक्षं, विशालभालपटलं, शुकचंचुस्मयहारिवक्रनासिकाभूषितं, विजयश्रियेव मूर्तया भवान्याऽसिलतयाऽलंकृतमध्यभागं, गोब्राम्हणप्रतिपालनव्रतदीक्षितं महाराजं शिवराजं ददर्श. निरीक्ष्य च लोकोत्तरतेजस्विनं शिवराजं सर्वे दिल्लीश्वरसभानिविष्टाः सभ्या विस्मिता अभवन्. मेनिरे च कोऽप्ययं सनातनधर्मस्य तथा गोब्राम्हणानां च रक्षणाय पृथिवीमागतोऽभिनवो देवावतार इति. स्वयं दिल्लीपतिरपि श्रीशिवराजतेजोधर्षितः खद्योत इवावाभासत. न केवलं पुरुषा एव तथाऽजायन्त किंतु अन्तःपुरवासिन्यो ललना अपि. ताश्चापहृतचित्तवृत्तयः कामप्यनिर्वचनीयामवस्थामस्पृशन्.

अथ कुमाररामसिंहेन प्रदर्शितमार्गः शिवराजो दिल्लीश्वरस्य पुरत उपायनं विधाय यथानियमं तस्थौ. दिल्लीश्वरोऽपि तं कुशलमपृच्छत्. शिवराजोऽपि विनयेन तदीयप्रश्नानामुत्तराणि ददौ. ततः प्रकृतिकुटिलः स दिल्लीश्वरोऽवरंगजेबो रामसिंहं सर्वेषां सभ्यानामधस्ताच्छिवराजं समुपवेशयितुमादिदेश. रामसिंहस्तु दिल्लीश्वरसेवकतया तथाकुर्वन् क्रुद्धेन शिवराजेन 'कैषा सभ्यानां योग्यता?'

इति पृष्टः पंचसहस्रसादिनामाधिपत्यमिति प्रत्यवदत्. तदेतान्निशम्य कोपातिरेकसंतप्तस्ताम्राभ्यां नेत्राभ्यामग्निस्फुलिंगान् वर्षन्निव कोपकरालया दृशा तं दिल्लीश्वरं दहन्निव शिवराज उच्चैः 'किमहमित्थमपमाननार्थमाहूतो दिल्लीश्वरेण ' इति जगर्ज. तस्य शिवराजस्य कोपातिरेकेण भयंकरीं मुद्रामवेक्ष्य सर्वे सभ्या भीतिविव्हला अभवन्. दिल्लीश्वरपारिपार्श्विका अपि क्षणमात्रं स्वशस्त्राणि विस्मरन्त आश्चर्यस्तब्धा अजायन्त. स्वयं दिल्लीश्वरोऽपि शिवराजस्य नरसिंहस्येव घोरां गर्जनां निशम्य निमीलितलोचनयुगलः परमेश्वरमस्मरत्.

अथ भीतोऽपि दिल्लीश्वरो धैर्यमवलंब्य ' शिवाजिः किं वदतीति' रामसिंहमपृच्छत्. तेन च तदाशये निवेदित एव स दुष्टमतिः अवरंगजेबः शिवराजं स्वावासं प्रापयितुं रामसिंहमाज्ञापयत्. स्वयमपि सभां विसर्जयित्वा स्वप्रासादं प्रतिययौ. शिवराजोऽपि रामसिंहेन विहितसान्त्वनो विवेकेन चित्तं वशीकृत्य तूर्णीं स्वस्थानमाययौ. वाचकाः ? यद्यपि शिवराजो न दिल्लीपतिसमस्तथापि तदधिकारिणां शिवराजसदृशोऽन्यः कोऽपि नासीत्. एवंसत्यपि दिल्लीश्वरेण स्वयमाहूयेदृशमपमाननं नाम सत्यमेव कृतघ्नता. किंच—शिवराजः क्रूरकर्माणं पितृघातकं बन्धुनाशकं तं जानन् दिल्लीनगरगमनं न्यषेधयदेव, परन्तु वृद्धो जयसिंहस्तं भूयो भूयो दिल्लीनगरं गन्तुं प्रेरयामास. जयसिंहोऽपि सर्वथोत्तमविधया शिवराजं सत्कर्तुं दिल्लीश्वराद्वचनं गृहीतवान्. परन्तु पापः एवमपि स्वकीयं वचनादिकं विधूय शिवराजमित्थमपमानयत्.

( ४ )

अथ द्वितीयदिनेऽपमानदुःखदग्धोऽपि दिल्लीश्वरस्य हृदयं ज्ञातुमिच्छुः शिवराजो रामसिंहं तस्य समीपं प्रैषयत्. विज्ञापयामास च तन्मुखेन पुनः समीलितुं. स तु कपटी तदीयामिमां विज्ञप्तिं नांगीचकार. सर्वथा स कपटी यवनराजः शिवराजं पुनर्द्रष्टुं नैच्छत्.

इदं वृत्तं रामसिंहस्य मुखान्निशम्य खिन्नो दुःखाकुलः शिवराजस्ततोऽनिष्टमात्मन आशंकमानो विचारयामास-अहो ? दैव-दुर्विपाकः ? मया खलु अस्मिन् घातात्मके यवनराजे विश्वसता स्वप्राणा जीवनसंदेहकोट्यामारोपिताः. यथा च मंत्रिणो मामवदंस्तथैव संवृत्तं. अस्तु. अधुना पुनरपि राजनीतिचातुर्यावलंबनं विना गत्यन्तरमेव न. तथापि विसर्जने दिल्लीश्वरमति स्वयमज्ञातव्यं, पश्चाद्यथायोग्यं विधास्यामि. एवं विचार्य रामसिंहमुखेन स्वदेशं गन्तुं शिवराजो दिल्लीश्वरस्याज्ञामयाचत. तदानीं दिल्लीश्वरस्तं प्राह 'शिवाजि मदीयसेनायां मुख्यं सेनापति पदे नियोक्तुमहमिच्छामि. यच्च तस्य दक्षिणदेशे राज्यमस्ति तत्सर्वमचलं तस्य सुतः संभाजिर्भुक्तात्. आर्यावर्ते नूतनं भूविभागं तस्मै वितीर्य तं स्वराज्यसेवकं कर्तुमिच्छामीति.

इदं च दिल्लीश्वरस्य वचनं कपटमयं स्वस्वातंत्र्यापहारकं मन्वानः शिवराजः स्वजनैः समं कर्तव्यं विचारयामास. स राम-

सिंहोऽपि दिल्लीश्वरस्य कृतघ्नतां तथा कापट्यमवेक्ष्य रुष्टो निभृतं तमसाहाय्ययत्. अत्रान्तरे दिल्लीश्वरो रामसिंहद्वारा शिवराजं प्रलोभेनानुकूलं विधातुं प्रायतत, परन्तु बुद्धिमान् शिवराजः केवलं विजापुरप्रभृतीनां दक्षिणापथवर्तिनां यवनराज्यानामाक्रमण एव युष्मान् साहाय्ययिष्यामीति वदन् न तत्र स्थातुमैच्छत्.

अथ सामदानाभ्यां बहुशो बोधितोऽपि शिवराजो यदा नानुकूलोऽभूत् तदा स कपटी दिल्लीश्वरो दण्डेन तं वशं विधातुं मतिं चक्रे. स च शीघ्रमेव पोलादखाननामानं यवनमाहूय शिवराजनिवासभवनमभितः पंचसहस्राणि खड्गधारिणां स्थापनार्थमादिशत्. जगाद च तं अनियंत्र्याधिकारिणे कस्याऽपि प्रवेशो निषिद्धः. शिवराजोऽपि क्वचिद्गच्छेच्चेत्तदा तेन शस्त्रिणां निरीक्षण एव गन्तव्यमिति. स चेमं स्वामिनियोगं शिरसा स्वीकुर्वन् रात्रावेव पंचसहस्रखड्गिनः शिवराजप्रासादमभितः स्थापयामास. प्रभाते च समुत्थिताः शिवराजसेवकाः परितोऽगणितान् शस्त्रधारिणः समवलोक्य संभ्रान्तास्तद्वृत्तं स्वामिने न्यवेदयन्. सोऽपि प्रथमत एव ज्ञाततत्कारणः किमप्यनुक्त्वाऽऽत्मानं बन्दिनं दिल्लीश्वरं च कृतघ्नं मेने.



## ( १४ युक्त्या ततो निर्वृत्तिः [illegible] )

१ प्रधानराजपुरुषपरिचयः

२ गुरुत्यागव्रतम्.

३ पलायनं क्रमेण तीर्थयात्रा.

४ मार्गे विपदां परिहारः

५ स्वदेशागमनम्.

( १ )

शिवराजश्चैवं दिल्लीश्वरेण विश्वासघातकेन प्रतिबंधे स्थापितो मनस्यकरोत्. अधुना नास्ति राजनीतिचातुर्यावलंबं विना गत्यन्तरं. तच्च विश्वासं विना नोपपद्यते. यथा च विश्वासमाश्रित्य वयमनेन विप्रलब्धास्तथैवास्माभिरपि करणीयं. तत् प्रथमतो विश्वासं संपादयितुं प्रयतिष्य इति. विचार्य चैवं प्रथमत आत्मानं दिल्लीश्वरसेवोत्सुकं निवेद्य कृत्स्नमपि स्वकीयं सैन्यं स्वदेशं प्रेषयितुमाज्ञामयाचत. दिल्लीश्वरश्च तत् स्वानुकूलमेव मन्वानस्तदनुमोदते स्म. ते च सैनिकाः शिवराजमीदृश्यामापदि विहाय गन्तुमनुत्सुकाअपि स्वामिनियोगपालनार्थं जग्मुः. मार्गे च वेषान्तराणि तथा कर्मान्तराण्यवलंब्य निभृतं तस्थुः. एवं सेवकान् प्रेषयित्वा शिवराजो दिल्लीश्वरं प्रार्थयामास. आसीन्मे महतीच्छा दक्षिणापथं गन्तुं पुरा, परन्तु दिल्लीश्वरस्य

सामर्थ्यमैश्वर्यं तथा तत्कृपापात्रीभूतानां सामन्तानामसाधारणमैश्वर्यमवेक्ष्य विस्मितोऽहमपि तथाभूत्वा दिल्लीश्वरस्य कृपां संपादयितुमिच्छामि. सम्प्रति च दिल्लीश्वरसेवातो नान्यत् कर्तव्यं जानामि. तदत्रत्यप्रधानपुरुषैः समं परिचयं कर्तुमिच्छामि. तेन ज्ञातव्यवहारोऽहमचिरादेव स्वमनोरथं पूरयितुं प्रभविष्यामीति. दिल्लीपतिश्चेदं श्रुत्वा सुतरां मुदितः सानन्दं प्रधानराजपुरुषाणां परिचयं कर्तुमन्वमोदत. वाचकाः ? एवमनुमोदितगमनोऽपि दिल्लीश्वरस्तं पोलादखानं सावधानेन वर्तितुमादिदेशैव. तेन निरीक्षकाः स्वस्वकर्मसु अशिथिलोद्योगा आसन्.

एवं लब्धाज्ञः शिवराजः प्रतिदिनं रामसिंहेन समं राजपुरुषाणां गृहाणि गत्वा तानपश्यत्. तेऽपि लब्धविश्वासाः शिवराजस्य वाक्चातुर्येण मोहिता यथेच्छं संलपन्तः सादरमवर्तन्त. शिवराजस्य सनातनधर्म[illegible] तथा विशालां शरीरयष्टिं विलोक्य रजपूतक्षत्रियाः प[illegible] स[illegible]. यवनास्तु तदीयानि पराक्रमकृत्यानि स्मरन्तः सभ[illegible] [illegible]व्यवाहरन्. अवशिष्टाः शिवराजसैनिकाश्च निरीक्षकसैनिकैः समं संलपन्तस्तेषां विश्वासपात्राणि बभूवुः.

( २ )

एवं गच्छत्यपि काले निरीक्षकानवहितानवेक्ष्य तथा दिल्लीश्वरं बिडालमिव दक्षं ज्ञात्वाऽन्यदेव निमित्तं व्यधात्. स च गुरुवासरे

स्वयमुपवसन् साधुभ्यस्तथाऽन्येभ्यश्च शर्करामयान् पदार्थान् तथा फलानि च पेटिकासु स्थापयित्वा वितरितुं प्रैषयत्. तथा नूतनमित्रेभ्यो राजपुरुषेभ्य उपायनमिषेण प्रेषयामास. तेऽपि तद् गृहीत्वा धन्यंमन्यमानाः पुनरपि शिवराजाय तथैव नानावस्तुपरिपूरिताः पेटिका उपायनीचक्रुः. एवं प्रतिगुरुवासरं प्रवृत्ते पेटिकाप्रेषणे निरीक्षणनियुक्ता अधिकारिणः प्रथमतस्ताः पेटिका उद्घाट्य प्रैक्षन्त. तासु च केवलं फलादिकं भक्ष्यपदार्थजातं वीक्ष्य यथा[illegible]गतं गन्तुमन्वमोदन्त. परन्तु यथा यथा तदा परि[illegible]ऽवर्ध[illegible] तथा [illegible] विश्वस्तास्तेऽदृष्ट्वैव पेटिका अमुञ्चन्. [illegible] निरी[illegible]क्ष्य शिवराजः प्रति[illegible] [illegible] [illegible] स्वदेश[illegible] गन्तुमन्वजानत्. तेऽपि [illegible] [illegible] [illegible] महाराष्ट्रगामिनि पथि तस्थुः.

अथ शिवराज आत्मानमस्वस्थं [illegible] वैद्यराजस्तु यथानियमं समागत्यौषधमदात्. परन्तु रोगपीडापरिहारो नाभवत्. प्रत्युत स ववृधे. अवशिष्टाः शिवराजसेवकाः पीडाभिया निरीक्षकाधिकारिणो बहिरेव स्थापयामासुः. तेऽपि दूरत एव शिवराजस्य हीरकमयीं राजमुद्रां निरीक्ष्य तावत्तत्र शिवराजं विद्यमानं मन्यमाना न्यवर्तन्त. कुमारो रामसिंहोऽपि दिल्लीश्वराय निवेद्य सर्वां परिस्थितिं दुःखायतेस्म. कपटी दिल्लीश्वरो नानावैद्यांस्तस्यारोग्याय प्रैषयन्न तु स्वदेशं तं गमयितुं मनश्चक्रे.

एवंवृत्तेषु कतिपयदिवसेषु पुनरपि आत्मानं नीरोगं ख्यापयन् शिवराजः स्वारोग्यसंतोषप्रदर्शनार्थं पुनरपि पूर्ववत् फलादिभक्ष्यपरिपूर्णाः पेटिकाः प्रेषयितुमारभत. काश्चन पेटिकाश्चतुर्वाहकवाह्या आसन्. निरीक्षकाश्च पूर्ववदेव काश्चन पेटिकाः परीक्ष्य वीतसंदेहा अन्यास्तथैव प्रैषयन्.

( ३ )

इत्थं विश्वस्तान्निरीक्षकान् प्रेक्ष्य शिवराजः पलायितुं मतिं चक्रे. तदर्थं च परमविशालास्तिस्रो विश्वस्तवाहकवाह्याः पेटिका विधाय तत्रैकस्यां स्वयमुपाविशत्. अन्यस्यां तु स्वतनयं संभाजिं. अशाच्च तं स्वामिभक्तं स्वशरीररक्षकं हिरोजीफर्जन्दं 'त्वं हि मदीयं वेषं धृत्वा मदीये शयने स्वपिहि. अयं च बालकस्तव समीपे तिष्ठतु. यदि कदाचित् कश्चन निरीक्षक आगत्य पृच्छेच्चेत्तदाऽद्य महाराजः प्रबलविवृद्धशिरोवेदनो न मानवभाषणं श्रोतुं शक्नोति तन्माभूतेति एष बालक एव प्रतिवदतु. प्रभाते च त्वमपि केनाऽपि मिषेणेतो निर्गतः संकेतस्थलमागच्छेति.

सोऽपि स्वामिभक्तः सर्वं तदुक्तं स्वीकृत्य तथैवान्वतिष्ठत्. शिवराजश्च कुलस्वामिनीं भवानीं नमस्कृत्य स्वहस्ते भवानीखड्गं धारयंस्तस्यां पेटिकायां स्थित्वा तस्मात् प्रतिबंधान्निरगात्. निर्विघ्नं

प्राप च संकेतितं स्थलं तथा स्वकीयं स्वामिभक्तसेवकमण्डलं च. अथ प्रभाते यथानियमं निरीक्षका आगत्य शिवराजप्रकृतिमजिज्ञासन्त. बालकश्च पूर्ववदेवोक्त्वा तस्य सुप्तस्य हिरंजीफर्जन्दस्य हस्तांगुलौ शिवराजमुद्रां दर्शयित्वा वीतसंशयान्निश्चिन्तांश्चक्रे. ततः स्वस्वस्थानं गतेषु तेषु निरीक्षकेषु स्वामिभक्तो हिरंजिफर्जदः स्वामिवेषमवतार्य स्ववेषं धृत्वा तेन बालकेन समं तस्मात् स्थानान्निरगात्. मार्गे च निरीक्षकैः पृष्टः ससंभ्रमं–अद्य खलु महाराजस्य शिरसि प्रबला वेदना जायते. तद्वैद्यराजमाव्हयितुं गच्छामीति वदन् जवेन पलायत. स च प्रथमं रामसिंहाय सर्वं वृत्तं निवेद्य ततः संकेतितं स्थलं जगाम.

ततश्च ते सर्वे निरीक्षका मध्यान्हेऽपि शिवराजमनुत्थितं तथा तदीयं सेवकं चाद्यापि अप्रतिनिवृत्तं प्रेक्ष्य संदिग्धाः शनैः शनैः समागत्यापश्यन्. तत्रापि शान्ति वीक्ष्य विवृद्धसंदेहा अन्तराविशन्. तत्र केवलां शय्यामवलोक्यापहृतशेमुषीकाः पाषाणवत्किंचित्कालं स्थिताः कथमपि शिवराजपलायनं स्वाधिपाय न्यवेदयन्. स तु अशनिना मस्तके ताडित इव महता दुःखेन दिल्लीश्वराय तद्वृत्तं श्रावयामास. अवोचच्च 'स्वामिन्? मदीयाः सैनिका अत्यन्तं विश्वासपात्राणि. तेषामुपजापेन शिवराजस्य पलायनं स्वप्नेऽपि न संभवति. तत्किं स आकाशमार्गेण पक्षिवदुड्डीय गतः किंवा भूमावन्तर्भूत इति न जानामि इति. दिल्लीश्वरश्चानेन प्राणहारकेणेव वृत्तान्तेन व्यथमानो

निभृतं हृदये कोपेन ज्वलन्नतिदु:खायतेस्म. तथापि शीघ्रमेव प्रजवान् सादिगणानाहूय शिवराजस्य शोधार्थं नानादिशासु प्रैषयत्. तेभ्यस्तेभ्यो ग्रामाधिपेभ्य: शिवराजान्वेषणार्थमाज्ञापयत्.

शिवराजश्च दिल्लीनगरान्निर्गत: संकेतस्थाने स्थापितं प्रजवमश्वमारुह्य स्वपुत्रमग्रे धारयन् यत्र स्वसेवका: स्वागमनं प्रत्यपालयंस्तं ग्रामं जगाम. तत: स्वजनै: समं मिलित: स्वदेशगमनमार्गं विचारयामास. अत्रान्तरे क्रमेण जनमुखसंचारिणीं 'शिवाजिनाम महाराष्ट्रभूपालो दिल्लीनगरात् पलायितस्तं च दिल्लीश्वर: सपरिश्रमं शोधयति' इति किंवदन्तीं शुश्राव. तां च श्रुत्वा सर्वेषां संघीभूयावस्थानमश्रेयस्करं मन्यमान: सर्वान्विभिन्नाभिर्दिशाभिर्गमयित्वा स्वेन समं पंच राजकीयकर्मकुशलांस्तथा त्रीन् सेवकान् गृहीत्वा गृहीतसंन्यासिवेष: स्वसदृशवेषधारिभि: समं तीर्थयात्रां चिकीर्षु: प्रथमं वाराणसीक्षेत्रमाययौ. तत्र च विहिततीर्थक्रिय: पुनरपि मथुराक्षेत्रमाजगाम. तत्र च स्वप्रधानामात्यस्य श्यालान् निवसतस्त्रीन् बंधूनवगम्य सन्तुष्टो रहसि तान् प्रेक्ष्य संभाजिं तेषामन्तिके स्थापयितुं मनीषां चक्रे. जगाद च 'दिल्लीश्वरसेवकभयाद्वयं सततं भ्रमाम:. एष च बालतया नास्माभि: सह भ्रमितुं शक्नोति. यदा चाहं स्वराज्यं गमिष्यामि तदा भवद्भि: सकलैरेव मदीये राज्ये वस्तुमागन्तव्यमिति. एतच्च तैरंगीकृते संभाजिराजं तेषां समीपे निधाय क्रमेण हरिद्वारत: सकलानि तीर्थानि पश्यन् कृत्स्नमार्यावर्तं पर्याटत्.

( ४ )

वाचकाः ? एवं सर्वत्र कपटिना दिल्लीश्वरेण प्रेषितेषु चारेषु संचरत्सु सत्सु शिवराजः समं स्वकीयैः स्वदेशं निर्विघ्नमाययाविति महदाश्चर्यं. यस्य कस्याऽपि स्वभावः परमप्रयत्नेन गोपितोऽपि प्रसंगतः प्रकटीभवत्येव. नह्यतियत्नेन गोपितोऽपि कस्तूरिकामोदः प्राकट्यं नायाति. इममेव निसर्गनियममनुसृत्य शिवराजः पथि स्थाने स्थाने विघ्नांल्लेभे, परन्तु भगवतीकृपया स निर्विघ्नं महाराष्ट्रमागच्छदिति सत्यं. तत्र कांश्चिद्विघ्नानुदाहरामि

शिवराज एकदा मथुराक्षेत्रे वसन् स्नानार्थं प्रतिदिनं यमुनातीरमगात्. तत्र समीचीनावतारपथाभावात् पंके क्लिश्नतो नानाजातीयान् जनान् वीक्ष्य दुःखोद्विग्नमना अब्रवीत् 'कथमेतावति क्षेत्रे केनाऽपि राज्ञाऽवतारपथो न निबद्ध' इति. तदिदं भाषणं निशम्य समीपवर्ती कश्चन तीर्थोपाध्यायः शिवराजस्य मुद्रां वीक्षमाणो जगाद 'यूयं न संन्यासिनः किंतु कुतश्चित्कारणविशेषाद्गृहीतसंन्यासवेषा' इति. तदाकर्ण्य कृष्णाजिपन्तः शिवराजप्रधानामात्यश्यालः प्रभूतं धनं तस्मै वितीर्य स्वेन समं तं पर्यटितुं निनाय. एवमेवैकदा संशयेन केनाऽपि ग्रामाध्यक्षेण सर्वे शिवराजप्रभृतयः प्रतिबंधे स्थापिताः. अथ शिवराजस्तस्मै ग्रामाध्यक्षाय सर्वं स्ववृत्तं कथयित्वा द्रव्यमपि ददौ. स च ग्रामाध्यक्षः शिवराजस्य नाम श्रुत्वैव भीतविस्मितः प्रणम्य

सर्वानप्यमुंचत्. एकदा च कस्मिंश्चित्तीर्थे स्नातुं शिवराजो ययौ. तत्र ब्राह्मणे संकल्पं कथयति सत्यन्ये ब्राह्मणाः परस्परं शिवराजपलायनवार्तामेव समलपन्. तान् संलापान्निशम्य शिवराजः शीघ्रं स्नात्वा सत्वरं स्थानान्तरं प्रायात्.

यदा खलु शिवराजः स्वदेशं प्राप्य स्वप्रधानामात्यश्यालान् मथुराक्षेत्रवासिनः संभाजिना समं समागन्तुं दूतद्वारा न्यवेदयत्तदा ते त्रयोऽपि बन्धवः क्रमेण दक्षिणापथगामिना मार्गेण प्रावसन्. मार्गे च संभाजिं राजचिन्हयुक्तं समीक्ष्य जातसंदेहेन दिल्लीश्वराधिकारिणा ते सर्वे प्रतिबंधे निहिताः 'यद्येष युष्माकं वंशजस्तदाऽनेन समं भवन्त एकपात्रे भुंजन्तामिति उक्तास्ते संभाजिना सममेकपात्रेऽभुंजत. तेन निवृत्तसंशयः स यवनाधिकारी तान् सर्वानमुंचत्.

सज्जनाः ? एतादृशाः पूर्वे ब्राह्मणा वा क्षत्रिया वाऽऽसन्. ततः शिवराजः स्वराज्यं स्थापयितुं प्राभवत्. सर्वतो जाग्रत्सु बलिष्ठेषु यवनेषु कः खलु एकाकी स्वामिभक्तसाहाय्यं विनाऽत्यल्पमपि देशकार्यं कर्तुं प्रभवेत् ! तेच परस्परं मिलित्वा कार्याणि चक्रुः. यत्र तु केवलं नाम्ना ब्राह्मणा वा क्षत्रिया वा कलहायमानाः स्वमातृभूमिं परकीयानां दासीं कुर्वन्ति तत्र वक्तव्यस्यावसर एव न. अस्तु.

( ५ )

एवं सर्वान्विघ्नान् भगवतीकृपयाऽपोह्य दिल्लीश्वरप्रतिबंधान्निर्गतो ग्रस्तमुक्तो विधुरिव शिवराजो नवभिर्मासैः स्वराज्यमागच्छत्. स च प्रथमं करवीक्षेत्रमागत्य स्वाधिकारिभ्यः स्वस्यागमनं निवेद्य ततएव रायगडदुर्गं स्वराजधानीमाययौ. सर्वे ते प्रथमतो द्वारापालान् 'केचन रामेश्वरगामिनः संन्यासिनो मातरं जिजादेवीं द्रष्टुमिच्छन्ति' इति कथयितुमवदन्. ते च द्वारपालास्तथा निवेद्य गृहीताभ्यनुज्ञाः सर्वानपि तान् प्रवेशयामासुः. शिवराजप्रभृतिषु तेषु सर्वेषु मातरं जिजादेवीं प्रणिपत्य स्थितेषु शिवराज एवैकाकी पुरतो जगाम. सा च जिजादेवी मार्गपरिश्रमातिरेकक्लान्तं शिवराजं न प्रत्यभिजानन्ती तं संन्यासिनं निःशंकमागच्छन्तं विलोक्य विसिष्मिये. अथ यदा शिवराजः स्वशिरस्त्राणं निष्कास्य तदंके स्वशिरो न्यधात्तदा सा वत्सला जिजादेवी तं प्रत्यभिज्ञायानन्दातिशयेन मुमूर्छ. तं च क्रोडे कृत्वा प्रमोदाश्रुभिरभिषिषेच. ततः सा स्वामिभक्तान् सेवकानभिनंद्य तेभ्यः प्रभूतानि पारितोषिकाणि विततार.

अथ 'शिवराजः पुनरपि सुखेन स्वराजधानीमाययौ' इति समाकर्ण्य सर्वे जना दर्शनार्थं प्रतिदिनमागच्छन्. दृष्ट्वा च परं मुदिता आत्मानं कृतकृत्यममन्यन्त. ततः शिवराजः स्वाधिकारिणां सभां विधाय तत्र पूर्वोक्तेभ्यः स्वामिभक्तेभ्यो दिल्लीप्रवाससहचा-

रिभ्यो महान्ति पारितोषिकाणि वितीर्य तान् सत्कारयामास. श्रीभगवतीं भवानीं मुक्ताफलैरभ्यषिंचत्. तद्वृत्तं च सर्वेभ्यो दुर्गाधिपेभ्यो दूतमुखेन निवेदयामास. ते च श्रुत्वा तद्वृत्तमानन्दसागरतलावमर्शिनोऽहोरात्रं शतघ्नीध्वनीनकार्षुः. नानोत्सवांश्चक्रुः. दिल्लीपतिरपि शिवराजं स्वराज्यगतमाकर्ण्य परं कुपितोऽपि प्रकटं तथाऽदर्शयन् सान्त्ववचनैस्तमादरयति स्म.





## ( १५ राज्याभिषेको राज्यव्यवस्था च )

१ राज्याभिषेकस्य कारणानि.

२ राज्याभिषेकविघ्नानां परीहारः.

३ राज्याभिषेकोत्सवः

४ मंत्रिमंडलं तथा न्यायविभागः.

५ दुर्गव्यवस्था, सेनानियमाश्च.

( १ )

एवं स्वदेशमागत्य लब्धस्वास्थ्यः शिवराजः क्रमेण दिल्लीश्वराक्रान्तान् स्वभूविभागानात्मसात्कृत्य पुनरपि स्वप्रतापेन शत्रूनकम्पयत्. विजापुराधीशप्रभृतयो यवनराजास्तमजय्यं मन्वानास्तूष्णीमासन्. दिल्लीश्वरस्तु समनुभूतशिवराजबुद्धिचातुर्यो न किमपि प्रतीपं समाचचार. एवं सर्वतः स्वास्थ्यं वीक्ष्य सन्तुष्टास्तदीयाः स्वामिभक्ताः सेवकास्तं राज्याभिषेकपूत विधातुं व्यज्ञापयन्. वस्तुतस्तु तदा तथाकारणान्यप्यजायन्त. तानि च संक्षेपेण यथा–

१ शिवराजो दिल्लीश्वरेणापमानितः परं चुकोपेति पूर्वमेव निवेदितं. अस्मिन् विषये बहवो मान्या जनाः ' नायं दिल्लीश्वरस्या-

पराधः किंतु शिवराजस्यैव. यतः शिवराजो न मूर्ध्न्यभिषिक्तो नापि तेषां कुले जातः, किंतु संमीलितानां लुण्ठकानां नायकः. तं च राजसभामागन्तुमेवानुमुमुदे दिल्लीश्वर इत्येव तस्य भाग्यं. वस्तुतस्तु स कारागार एव स्थापनीयः' इति समलपन्. तान् संलापानभिशम्य खिन्नास्ते दिल्लीनगरवासिनः शिवराजसेवका मनसि चक्रुः 'इतो निर्गतं स्वामिनं यथाविध्यभिषिच्येममपवादं दूरीकरिष्याम' इति.

२ दक्षिणापथवासिनः सर्वेऽपि चातुर्वर्णिका जनाः शिवराजस्य शासनेन सन्तुष्टाः परां वृद्धिमलभन्त. तत्पुत्राश्च नानाशौर्यकार्याणि विधाय संमानांश्च प्रापुः. तेषां च दायादा बहवो विजापुराधीशस्य तथा दिल्लीश्वरस्य सेवका आसन्. ते चात्मानं सार्वभौमसेवकान् मन्वानाः शिवराजसेवकान् हीनानमन्यन्त. तेन मानधनाः सेवकाः प्रथमं दिल्लीश्वरं ततो विजापुराधीशमन्ते शिवराजं सेवितुमैच्छन्.

३ ये केचन देशान्तराद्विद्वांसो वा राजपुरुषा वा केनापि निमित्तेन शिवराजं द्रष्टुमागच्छंस्तदा ते यवनाधीशवत्तं नमस्कर्तुं लज्जिरे. तेनाऽपि शिवराजः स्पष्टमिमं भेदं ज्ञातवान्.

४ ये खलु तदानींतनाः स्वराज्यस्थापनायां रामदासप्रभृतयः साह्याय्यकारिणः साधुवरा आसंस्ते पूर्वेतिहासं जानन्तः पूर्ववदिमान् यवनराजाननादृत्य पुनरप्यार्यक्षत्रियराज्यस्थापना जातेति

साधारणेभ्यो जनेभ्यो द्योतयितुं नितरामुत्सुकाः शिवराजमभिषेकार्थ-मुत्साहयामासुः.

५ विजापुरराज्ये तथा दिल्लीश्वरराज्ये ये स्वकीया जयसिंह-सदृशा आर्यक्षत्रिया आसंस्ते च मनसा शिवराजं साहाय्ययितुमिच्छन्तोऽपि तदुद्यमस्याशाश्वतिकत्वं मन्वानास्तटस्था एवासन्. विहिते राज्याभिषेके तत्साहाय्यलाभोऽपि भविष्यतीति ते मेनिरे.

६ विशेषतश्च धार्मिकविधिभिर्विहिताः संस्कारा यथा अज्ञानां हृदयेषु स्थिरा भवन्ति न तथाऽन्ये. तथाचेमं धार्मिकं राज्याभिषेकं विधाय जनसंग्रह आधिक्येन भविष्यतीत्यपि.

७ एकदा शिवराजः केनाऽपि प्रसंगेन सर्वान् स्वसजातीयान् भोजनाय समाव्हयत्. तत्र सभाधिकारिणा सर्वेषामासनानामपेक्षया शिवराजस्यासनमुन्नतं विहितं. तमिममासनानां नीचोच्चभावमपमान-कारकं मन्यमानाः सर्वे ते महाराष्ट्रियाः क्रुद्धाः सभाधिकारिणं प्रत्य-वोचन्—वयं बहोः कालादारभ्य कुलीना राजचिन्हचामरादिमंडि-तशिरसो विजापुराधीशप्रभृतिभिः सार्वभौमैः संमानिताः स्मः. शिवराजस्य पिता तु विजापुरराज्येऽल्पवृत्तिक एवासीदिति सार्वजनीनं. यद्यपि शिवराजो बलाढ्यो धनाढ्यश्च संवृत्तस्तथापि स न सार्वभौमेन केनचिन्नृपेण वा प्रजाजनैर्वा यथाशास्त्रं संमानितः. तद्वयं दारिद्र्य-

पीडिताअपि नेममपमानं मर्षयाम इति. स तु सभाधिकारी सविनयमञ्जलिं बध्वा 'स्वामिचरणेभ्यो निवेद्य यथाज्ञं करिष्यामि' इत्युक्त्वा तथाऽकरोत्.

शिवराजश्चेदं तन्मुखाद्वृत्तमाकर्ण्य विस्मितः सर्वानाहूयापृच्छत्. यदि यूयं दिल्लीश्वरप्रभृतिभिर्यवनराजैः संमानिता आत्मानं मन्यध्वे, तदा ते दिल्लीश्वरप्रभृतयो यवनराजा येन सार्वभौमाः कृतास्तेनैवाहमपि भूपालः कृतः. स्वकीयस्य ममोत्कर्षमसहमाना यदि यूयं वृथा कलहायध्वे तदा नास्ति युष्माभिः प्रयोजनं. तद्यथाभिलषितं कुरुध्वमिति. एतच्च सान्त्ववचनमाकर्ण्यापि प्रायः सर्व एव कलुषितहृदया अभुक्त्वैव स्वनिवासमगच्छन्. तेनाऽपि शिवराजं स्वामिभक्ताः सेवकाः शीघ्रमेव यथाविधि सिंहासनाधीश्वरं विधातुमैच्छन्.

एकदा चिन्तामग्नः शिवराजः सुप्तः स्वप्ने भगवतीं ददर्श. सा च प्रसन्नवदना प्रेम्णा मस्तकं जिघ्रन्ती सस्नेहमुवाच—वत्स! शिवराज! त्वया महता पौरुषेण गोब्राह्मणप्रतिपालनार्थं स्वराज्यं स्थापितं. यत्नेन च विजापुराधीशप्रभृतयो बलाढ्या नृपा दण्डिताः. तत् साम्प्रतं सकलजनविश्वासार्थं त्वमात्मानं भोजवद्वैदिकेन विधिनाऽभिषेचय. तेन च यवनराजा अतोऽधिकमेव हीनबला भूत्वा त्वत्तो भीता वर्तिष्यन्ते, इति. प्रभाते च शिवराजः प्रसन्नमना मात्रे स्वप्नं कथयित्वा तदनुमितिं पप्रच्छ. सा तु वीरमाता सत्वरमेव राज्याभिषेकविधिं विधातुमवदत्.

( २ )

एवं कृतनिश्चयं स्वस्वामिनमवलोक्य सर्वे ते सेवका महाराष्ट्रवासिनं विप्रगणं प्रार्थयन्त. यद्यपि ते शिवराजाय परमस्पृहयंस्तथापि शिवराजवंशं सम्यगजानन्तः क्षत्रियवदभिषेकानर्हं ते मेनिरे. इमं विघ्नं प्रत्युपस्थितं समवलोक्य विश्रान्त सेवकाः शिवराजवंशावलिं सम्यगशोधयन्. अचिरादेव पूर्वदर्शितरीत्या 'प्रसिद्धोदयपुरराजसंबंधिनि महाराणाप्रतापसिंहजननपरिपूते सूर्यवंशे शिवराजस्य जननं 'इति निरणयन्. तद्वृत्तं विप्रगणाय दर्शयित्वा तमपि निःसंदेहमकुर्वन्.

एवं महता प्रयासेनैतिहासिकीं प्रमाणसामग्रीं लब्ध्वा क्षत्रियत्वं प्रसाध्य निराकृतेऽपि तस्मिन्विघ्ने द्वितीयो विघ्नः 'यस्य बहवो विवाहाः संवृत्तास्तस्य कथं साम्प्रतमुपनयनं. उपनयनाभावे राज्याभिषेको न भवति 'इति प्रादुर्बभूव. तमपि निराचिकीर्षुः स्वामिभक्तो बाळाजिः सर्वानवदत्—वयस्याः! अस्मिन्विषये काशीस्थाः पण्डिता एव द्रष्टव्याः. यतोऽस्मिन् दक्षिणापथे न तथा पण्डिताः सन्ति 'इति. तेषामनुमितिमादाय काशीं गत्वा स तत्रस्थां पण्डितमण्डलीं ददर्श. तदानीं काशीस्थेषु पण्डितेषु गागाभट्टो नाम पण्डितप्रवरो मुख्य आसीत्. स च धर्मशास्त्रनिष्णातोऽन्येषु अपि शास्त्रेषु अद्वितीय आसीत्. तमग्रेकृत्वा सभां विधाय तत्र 'उदयपुरेशप्रभृतीनां यथाऽभिषेका भवन्ति तथैव शिवराजोऽभिषेचनीयः, तत्रोपनयनादिक-

मापद्धर्मान्तर्भूतं मत्वा यथाकथंचित्कर्तव्यमिति निरणयत्. इमं च निर्णयं पैठणवासी विप्रगणः स्वीचकार. ततः कतिपयैः काशीस्थैः पण्डितैः समं स गागाभट्टः शिवराजाभिषेकार्थं राजधानीमागन्तुं प्रतिश्रुत. शिवराजश्च तमागच्छन्तमाकर्ण्य सन्तुष्टः सत्कारार्थं शिबिकादिकं संप्रेष्य समागतान्नुत्तमेषु प्रासादेषु स्थापयित्वाऽऽदरेणासेवत.

( ३ )

एवं सकलानपि विघ्नान् दूरीकृत्य सिद्धां सामग्रीमवलोक्य सन्तुष्टः स्वामिभक्तः शिवराजसेवकगणो राज्याभिषेकसन्नाहमकरोत्. पुण्यनदीनामुदकं तथा सागरस्य जलं मृगादीनां चर्माणि सिंहासनसाधनानि सर्वाण्यपि संपादयामास. सर्वेषु दुर्गेषु राजधानीलक्षणसमन्वितं रायगडदुर्गमवेक्ष्य तदेव सर्वानुमत्या राजधानीं विधातुं शिवराजं प्रार्थयत. ततश्च ये केचन स्वकीया भूपालास्तथा स्वदेशस्थाः प्रतिष्ठिता जनास्तेभ्यो निमंत्रणानि ददौ. तेषां निवासार्थं सर्वत्र दुर्गे महान्ति पटगृहाणि तथाऽन्यानि च गृहाणि विरचयामास. वाचकाः? अस्य महोत्सवस्य पूर्त्यै शिवराजसेवकगणस्तथा महाराष्ट्रजनसमूहः परं प्रायतत. यतो नायं महोत्सवः शिवराजस्य किंतु महाराष्ट्रे निवसन्त्याः स्वातंत्र्यदेव्याः! या खलु स्वतंत्रतादेवी नानादिशासु भ्रमन्ती कुत्रापि आश्रयमलब्ध्वा खिन्ना यवनपीडिता कामधेनुरिव सर्वतः पर्वतगणपरिवेष्टिते महाराष्ट्रेऽखिलप्रतापोज्ज्वल-

यशस: शिवराजस्य विशालं करवालालंकृतं दक्षिणबाहुमाश्रित्य लब्धस्वास्थ्या व्यराजत तस्या एवायं महोत्सवः, तथापि संपूर्णं वृत्तमस्योत्सवस्य नोपलभ्यत इति महत्कष्टं. यावल्लभ्यते तावतैव सन्तोष्टव्यं.

शिवराजश्च पूर्वमत्र राजनिवासयोग्यं महाप्रासादं तथाऽन्येषामपि राजमंत्रिणां निवासार्हान् सौधान् व्यरचयत्. तथा विविधकोशगृहाणि, सैनिकनिवासस्थानानि, गजानामश्वानां शालाः, अस्त्रागाराणि, तदेतत् सर्वं पुनः संस्कृत्योत्सवयोग्यमकरोत्. ततो मीलितानां पण्डितानामनुमत्या राज्याभिषेकदिवसं गागाभट्टः 'इन्द्रियद्रव्यभूतब्रह्मपरिमितस्य (१५९६) शालिवाहनशकीयस्य वर्षस्य ज्येष्ठमासस्य त्रयोदशीं' निरणयत्.

अथ स्वयंऽयस्य गोब्राह्मणप्रतिपालनार्थं कृतपरिश्रमस्य शिवराजस्य राज्याभिषेकमहोत्सवं द्रष्टुं त्वरितमागच्छता भगवता भास्करस्य प्रभा उदयाचलशिखरमाजगाम. शिवराजसेवकाश्च रात्रावपि अलब्धनिद्रा मंगलतूर्यान् वादयामासुः. तं च मंगलध्वनिं निशम्योत्थिताः शिवराजाभिषेकोत्सवदर्शनार्थं समुत्सुका जनाः स्नात्वा मंगलवस्त्राणि परिधायाभिषेकमण्डपमाजग्मुः. शिवराजोऽपि समं मंत्रिण्डलेन विरचितमंगलस्नानः शुभ्रवस्त्राणि तथा शुभानलंकारान् धृत्वा प्रथमतः स्वकीयमधिकारिमण्डलं विरचयामास. तत्रेत्थं

लेखकद्वयं, द्वादशकोषाधिकारिणः, अष्टादशशालाधिकारिणः, नगराधिकारिणः, ग्रामाधिकारिणः, प्रान्ताधिकारिण इति. ततो यथाविधि विहितप्रायश्चित्तः सुवर्णमयं सिंहासनमधिरुरोह. तस्य पत्नी सखीदेवी समं युवराजेन समीपमुपाविशत्. पूर्वस्यां दिशि मोरोपन्तो नाम मुख्यामात्यो घृतपूर्णं सुवर्णकलशं, दक्षिणेन सेनापतिर्हंबीरराबो दुग्धपूर्णं रजतकलशं, पश्चिमेन न्यायाधीशो दधिपूर्णं ताम्रकलशं, उत्तरेण कोशाध्यक्षो मधुपूर्णं सुवर्णकलशं समादाय तस्थौ. एवमन्यास्वप्युपदिशासु सर्वे राजचिन्हानि छत्रचामरादीनि धारयन्तोऽधिकारिणस्तस्थुः. ततःपरं निमंत्रिता जनास्तथाऽन्येऽधिकारिणश्चाऽतिष्ठन्.

अथ सम्प्राप्ते शुभलक्षणे मुहूर्तक्षणे सर्वे विद्वांसो विप्रगणा वेदमंत्रानुद्घोषयन्तः शिवराजं यथाविध्यभिषेचयामासुः. तदानीमेव रायगडदुर्गेऽष्टाधिकं शतं शतघ्नीनां ध्वनयोऽभवन्. तान्निशम्य क्रमेण प्रतिदुर्गं तावन्त एव शतघ्नीनां ध्वनयोऽजायन्त. प्रजाजनाश्च प्रेम्णा समाकृष्टाः शिवराजं सुवर्णमयैः पुष्पैरभ्यषिंचन्. माता जिजादेवी तु स्वपुत्रस्येदृशमलौकिकं भाग्यं पश्यन्ती कियन्तं प्रमोदराशिमभजतेति वाचकैरेव मनसा कल्पनीयं. न तं वर्णयितुं बृहस्पतिरपि शक्तः. ततः शिवराजः स्वस्य सुवर्णतुलां विधाय पंचदशसहस्राणि होनाख्याः सुवर्णमुद्रा ब्राह्मणेभ्योऽदात्. सर्वेभ्यो मंत्रिभ्यश्च तत्तदधिकारानुरूपं वस्त्राणि वितीर्य हस्तिनमारुह्य समं सेनापतिना राजचिन्हधारिसैनिकानुगतेन देवदर्शनार्थं देवालयमगात्. तस्मिन् समये सादिमण्डलं

पदातिमण्डलं हस्तिमडलं शतघ्नीविभागः क्रमेण यथास्थानमवस्थाय परां शोभामजनयत्. नमस्कृत्य कुलस्वामिनीं स्थाने स्थाने स्वपातिव्रत्यरक्षणेन कृतार्थाभिरिव सुवासिनीभिर्विरचितानि नीराजनानि स्वीकुर्वन् क्रमेण स्वप्रासादमाजगाम.

सायं चागणितदीपमालाप्रकाशिते राजसभामण्डपे सर्वेभ्यो ब्राम्हणेभ्यस्तथा स्वामिभक्तेभ्यः सेवकेभ्यः पारितोषिकाणि वितरितुं सभां व्यधात्. नियते समये तस्मिन् राजचक्रचूडामणिः प्रतिभातिशयेन बृहस्पतिसमैः प्रधानामात्यैरलंकृता सा सभा इन्द्रसभाभ्रमं चक्रे. अथ 'गोब्राम्हणप्रतिपालकराजाधिराजमहाराजछत्रपतिसिंहासनाधीश्वरश्रीशिवाजिमहाराज' इत्युच्चैर्घोषयद्भिः कनकदण्डधारिभिः प्रतिहारिभिः प्रदर्शितपथः सर्वेषां राजपुरुषाणां प्रणामान् गृह्णन् शिवराजो ब्राम्हणेभ्यः प्रणम्य सिंहासनमभूषयत्. प्रथमं च सिंहासनस्थ गागाभट्टाय लक्षमुद्रास्तथा बहुमूल्यानि वस्त्राणि वितीर्य सन्तोषयति स्म. तत ऋत्विग्भ्यः पंचसहस्रमुद्रा, उपाध्यायाय च चतुर्विंशतिसहस्रमुद्रा ददौ. सर्वेभ्यः स्वामिभक्तेभ्यः सेवकेभ्य उत्तमोत्तमानि पारितोषिकाणि प्रदाय सर्वानेव संतोषयामास. सज्जनाः? यदि निरलसोद्योगस्य फलं भवन्तो ऽत्र कुत्रापि द्रष्टुं वांच्छन्ति तदा शिवराजचरित एव तद्द्रष्टव्यं. क्व च विजापुराधीशसेवकाः शहाजिराजाः, क्व च तदीयः पुत्रः स्वपराक्रमकृत्यैर्दिल्लीश्वरमपि कम्पयन् स्वतंत्रः छत्रपतिपदवीभूषितः शिवरा-

जः ! अस्तु. एवं सर्वाननुगृह्य 'अद्यप्रभृति राज्याभिषेकशकः प्रारभणीय 'इति स्वमंत्रिणः समादिश्य मालोजिराजेभ्यो भगवत्या प्रदत्तं 'तव कुले शकस्य कर्ता राजा भविष्यति 'इति वरं सत्यमकरोत्.

( ४ )

इत्थं निर्विघ्नं राज्याभिषेकमहोत्सवं विधाय राज्यव्यवस्थां विधित्सुः शिवराजः प्रथमं स्वमंत्रिमंडलं व्यरचयत्. तत्र चाष्टौ मंत्रिण आसन्. तेषां नामानि तथा कर्माणि वेतनानि यथा–

| (परकीयं नाम) | (स्वकीयं नाम) | (कर्म) | (वेतनम्) |
|---|---|---|---|
| १ पेशवा | १ पन्तप्रधानः. | मुख्यामात्यकर्म. | १२ सहस्राणि |
| २ मुजुंमदार | २ पन्तामात्यः | आयव्ययनिरीक्षणं | १० ,, |
| ३ सुरनीस | ३ पन्तसचिवः. | लेखसंग्रहः | १० ,, |
| ४ वाकनीस | ४ मंत्री. | स्वकीयराज्यकर्म | ,, ,, |
| ५ डबीर | ५ सुमन्तः. | परराज्यव्यवहारः | ,, ,, |
| ६ सरनौबत | ६ सेनापतिः. | सेनाकर्म | ,, ,, |
| ७ ० | ७ न्यायाधीशः. | न्यायकर्म | ,, ,, |
| ८ ० | ८ पंडितराजः | धर्मनिर्णयः | ,, ,, |

वाचकाः ? उपरितनो लेखोऽयं मयेतिहाससंग्रहाद्गृहीतः. अनेन शिवराज आर्यसंस्कृतिं तथाऽर्याणां गीर्वाणभाषामेव परमादरयतिस्मेति ज्ञायते. यतः प्राचीनानि मंत्रिणां परकीयानि नामानि विपरिवृत्य नूतनानि स्थापितवान्.

एवं मंत्रिमण्डलं विधाय न्यायमूलिकामेव राज्यप्रतिष्ठां मनसिकुर्वाणः शिवराजो मनस्यकरोत्–यथा यवनानां राज्ये एक एव धर्माध्यक्षो व्यावहारिकं तथा धार्मिकं न्यायं करोति तथा न स्वराज्ये भवितव्यम्. परकीया यवनाः बाहुबले विश्वसन्तो न न्यायमाद्रियन्ति. स्वराज्ये यद्येक एव धर्माध्यक्षो न्यायं कुर्यात्तदास्मत्प्रजाभूतानां यवनानां महती हानिः. न खलु सनातनधर्माभिमानी यवनान्निरपराधान् मोक्तुं तथा सापराधानार्यान् दण्डयितुं शक्नोति. अन्यान्यधर्मानुयायिषु स्वप्रजाजनेषु राज्ञा तुल्यवृत्तिना भाव्यं. यथा हि प्रकाशदाता सूर्यः सर्वत्र साम्येन वर्तते. तथैव दुष्टानां दमनार्थं शिष्टानामनुग्रहार्थं निर्मितेन राज्ञा तावदेव कर्तव्यं न ततोऽधिकं. एतच्च मनसिकृत्वा शिवराजः स्वराज्ये द्वौ न्यायाधीशौ व्यधात्. तत्रैको लौकिकान् व्यवहारान् पश्यन् लोकस्वास्थ्यरक्षकान्नियमानाश्रित्य शासनमकरोत्. अन्यश्च तत्तद्धर्मशास्त्रप्रमाणो लोकस्थितिनाशकारिणोऽपराधानद्राक्षीत्. तेन यवनानां राज्ये यथाऽर्यवंशजा न्यायमलभमाना अत्यन्तमत्रस्यंस्तथा न शिवराजराज्ये यवनाः. तेन प्रतिदिनं नूतना जनाः समागत्य शिवराजराज्येऽवसन्.

एवं न्यायविभागं व्यवस्थाप्य सेनाव्यवस्थां चिकीर्षुः शिवराजः प्रथमं दुर्गव्यवस्थां चक्रे. यतः सर्वस्याऽपि राज्यस्य प्रतिष्ठा दुर्गैरेवाभवत्. सेनाऽपि दुर्गाण्याश्रित्यैव युध्यमाना रिपून् व्यजयत. तत्र मुख्यो दुर्गाधिपः कुलशीलसंपन्नः स्वामिभक्तः शूर आसीत्. तस्य

चत्वारः सहायाः क्रमेण दुर्गस्य चतस्रो दिशा अपालयन्. प्रतिदुर्गं पदातिदलं धान्यसंग्रहं मधुरजलतडागान् पशूनां कृते तृणसंग्रहं स पर्याप्तं स्थापयामास. प्रतिदुर्गमुपत्यकासु दुर्गरक्षणार्थं सैनिकदलविभागान्निधाय तद्द्वारा शत्रुं तथा तदीयं गूढचारं प्रविशन्तं ज्ञातवान्. सायं च दुर्गाधिपेन स्वयं दुर्गद्वाराणि पिधाय तेषु स्वयं प्रतिबंधयंत्राणि स्थापयित्वा स्वागारे स्थातव्यं. रात्रौ चाकस्मादागत्य सर्वे विभागाः परीक्षणीयाः. सर्वत्र निरीक्षकान् सावधानेन वर्तमानानवलोक्य दुर्गाधिपेन वर्तनीयमिति विशेषं नियमं चक्रे. दुर्गाधिपश्च सर्वं व्ययं समीपवर्तिनः प्रान्ताधिपात् धनमाहृत्य चक्रे.

एवं दुर्गव्यवस्थां कृत्वा सेनाव्यवस्थां कर्तुं प्रचक्रमे. तत्र शिवराजसेनायां प्रायः सादिन एव बाहुल्येनासन्. तेन तेषां मुख्य एव मुख्यः सेनापतिरासीत्. पदातिसेनामुख्यश्च तत्सहकारी. सादिनः सैनिकाअपि द्विविधाः. स्वायत्ताश्वा राजदत्ताश्वा इति. तान् क्रमेण 'शिलेदार, बारगीर, नामभ्यां व्यपादिशन्. तत्र नवसादिनामुपर्येको मुख्यो यं 'नायकपदेन व्यवाहरन्. पंचानां नायकानामधिकारी हवालदारनामा, तयोश्च द्वयोर्जुमेलदारनामा, दशानामेषां तु हजारीनामैक एव. एते च साक्षात्सेनापतिना समादिष्टानि कार्याण्यकुर्वन्. तदनुरोधेन च युद्धे नियुक्तानि कार्याणि चक्रुः. एवमेव पदातिसेनायामपि व्यवस्थाऽऽसीत्. इत्थं सर्वं व्यवस्थाप्य स्वस्थचित्तः शिवराजः पुनरपि स्वराज्यमर्यादां वर्धयितुं मनोऽकरोत्.



## ( १६ कर्णाटकाक्रमणम्. )

१ व्यंकोजिराजस्य कार्याक्षमत्वम्.

२ गोवळकोंडराज्याधिपेन सह स्नेहः.

३ स्वराज्यमर्यादावृद्धिः.

४ व्यंकोजिराजस्योपदेशः.

( १ )

अथ कैलासवासिषु शहाजिराजेषु तदीये ज्येष्ठपुत्रे शिवराजे स्वराज्यस्थापनाव्यग्रे कनिष्ठः पुत्रो व्यंकोजिराज एव सर्वं पैतृकं कर्णाटकविभागमपालयत्. तत्र च महाकुलसंभूतः स्वामिभक्तो मौलो दादोजिकोंडदेव इव परमविश्वासपात्रं शहाजिराजानां रघुनाथपन्तनामा वृद्धोऽमात्य आसीत्. सोऽपि स्वामिनमिव स्वामिपुत्रं महताऽऽदरेण सेवमानः स्वकर्तव्यमकरोत्. ततः क्रमेण नीचजनसंगतं विषयासक्तं स्वाधिपमवलोक्य दुःखाकुलः सोऽमात्यशिरोमणिर्निभृतमेकान्ते भूयोभूयः सत्कर्तव्यं तस्मा उपदिदेश, परन्तु यशो न लेभे. नैतावदेव किंतु व्यंकोजिर्हठात्तस्यापमानं चक्रे. ततः स स्वामिभक्तो रघुनाथपन्तः स्वामिपुत्रस्य तथा स्वामिना महता कष्टेन संपादि-

तस्य राज्यस्य दुरवस्थां द्रष्टुमपारयन्निभृतं शिवराजाय पत्रद्वारा सर्वं वृत्तं न्यवेदयत्. शिवराजोऽपि बन्धोरिमामवस्थां ज्ञात्वा दुःखाकुलः सत्वरमेव कर्तव्यबोधकं पत्रं तस्मै व्यसर्जयत्. तल्लब्ध्वा क्रोधान्धः स मलिनमतिर्व्यंकोजिराजस्तं महाभागं परं निरभर्त्सयत्. नानाकुशब्दैरताडयत्. नीचजनैरपामानयत्. ततश्च स मानी गुणी प्रधानामात्यः 'अत्रावस्थानमधुना नोचितं' इति निश्चित्य ततो निर्गत्य शिवराजं द्रष्टुं रायगडदुर्गमागन्तुं प्रातिष्ठत. राजनीतिचतुरः स नरश्रेष्ठो रिक्तेन पाणिना महाराजः कथं द्रष्टव्य इति विचारयन् गोवळकोंडेराज्यस्यामात्यौ ददर्श. परमधार्मिकौ तौ कर्णाटकविभागे तथा कृत्स्नेऽपि दक्षिणापथे शिवराजस्य राज्यं वर्धयितुं तेन प्रधानामात्येन रघुनाथपन्तेन याचितौ संतोषेण साहाय्यं विधातुमंगीचक्रतुः. रघुनाथपन्तद्वारा शिवराजं स्वराज्यागमनाय प्रार्थयामासतुः. स्वयं भागानगराधिपोऽपि शिवराजप्रतापश्रवणभीतस्तदीयं स्नेहमाचकांक्ष. रघुनाथपन्तश्चेदं राजकारणं लब्ध्वा कृतकृत्यो महता संतोषेण सातारानगरमागत्य छत्रपतिं शिवराजं वीक्ष्य सर्वं वृत्तं न्यवेदयत्. विज्ञापयामास च कर्णाटकविभागाक्रमणाय. शिवराजोऽपि स्वराज्यवर्धनार्थं रात्रिंदिवं प्रयतमानोऽनायासेन समागतमिदमाव्हानमंगीकृत्य दायभागयाचनामिषेण कर्णाटकविभागं स्वराज्यान्तर्गतं विधातुमाचकांक्ष. अस्मिन् समये विजापुरामात्यस्य दिल्लीश्वरनियुक्तस्य दक्षिणापथाधिकारिणश्च स्नेहेन विजापुराधीशो

दिल्लीश्वरस्य परमं मित्रमभवत्. तेन गोंवळकोंडेराज्याधिपो भीतः शिवराजस्य स्नेहमवांच्छत्. तामाकांक्षां पूरयित्वा विजापुराधिपस्य वैरं निर्यातनीयमित्यपि शिवराजो मनस्यकरोत्.

अथ कर्णाटकविभागं गन्तुं कृतनिश्चयः शिवराजस्तस्यातिदूरत्वेन पश्चात् कृत्स्नां राज्यव्यवस्थामकरोत्. दिल्लीश्वराय प्रभूतं धनं तत्सेवकेभ्यश्च नानाविधानि बहुमूल्यानि वस्तूनि उपायनीकृत्य सर्वानपि स्वानुकूलान् व्यधात्. सर्वाणि दुर्गाणि संनाह्य स्वराज्यरक्षणे मोरोपन्तनामानं प्रधानामात्यं नियोज्य स्वयं कर्णाटकविभागं गन्तुं शुभे समये प्रातिष्ठत.

( २ )

अस्मिन् समये शिवराजः स्वेन समं त्रिंशत् सहस्राणि सादिनां चत्वारिंशत् सहस्राणि पदातीनां जग्राह. एतावत्याः सेनायाः पालनार्थं स भागानगराधीशात् द्रव्यमयाचत. सोऽपि महत्या सेनया सममागच्छन्तं महाप्रतापिनं शिवराजमाकर्ण्य भीतः स्वकोशाध्यक्षं तस्मै यथेच्छं द्रव्यं वितरितुमन्वमोदत. शिवराजोऽपि तल्लब्ध्वा तुतोष.

ततः शिवराजः शीघ्रमेव भागानगरराज्यं प्रविश्य निषिद्धात्याचारोऽत्याचारकारिणः सैनिकान् दण्डयन् भागानगरसीमामागच्छत्. तत्र च महता सैन्येन समं तौ भागानगराधीशस्य प्रधानामात्यौ प्रत्युद्गम्य महता संतोषेण शिवराजं भागानगरमानयताम्. शिवरा-

जोऽपि स्वसैन्येन समं कृतनगरप्रवेशः प्रजाजनैः पुष्पवृष्ट्यादिभिः सत्कारैरभिनंद्यमानो नियते स्थानेऽवसत्. ततश्च शुभे दिने स्वामात्यैः समं राजसभां गत्वा भागानगराधीशं गोंवळकोंडेराज्याधीश्वरं यवनाधिपमपश्यत्. सोऽपि समागच्छन्तं शिवराजमाकर्ण्य महता मोदेन कतिपयपदैः प्रत्युद्गत आश्लिष्य तेन सममेकासनेऽतिष्ठत्. स यवनाधिपश्च शिवराजस्य सैन्यं तथा तदीयामाकृतिमवलोक्य परं तुष्टस्तदधिकारिभ्यः पारितोषिकाणि वितीर्य शिवराजाय गजांस्तथोत्तमानश्वान्नानाविधान् रत्नालंकारान् दत्वा व्यक्तीकृतस्नेहो भागानगराधीशः शिवराजं परं समतोषयत्.

अथ शिवराजे भागानगरमधिवसति सति एकदा रघुनाथपन्तो यवनाधिपस्य दर्शनार्थमगच्छत्. तदा तस्मै स यवनाधीशः शिवराजसैनिकशौर्यमपृच्छत्. रघुनाथपन्तोऽपि तास्ता वृत्ताः शौर्यकथाः कथयन् 'स्वामिन् ? शिवराजसैनिका गजानपि तृणवन्न गणयन्तीति' वदन्नस्तौत्. तेन विस्मितः स तेषां शौर्यं द्रष्टुं कृतनिश्चयो रघुनाथपन्तद्वारा एसाजीकंकप्रभृतीन् दश सैनिकानाव्हयत्. द्वितीये दिने सकलप्रजाजनालंकृते राजप्रासादांगणे स्वयं राजपुरुषैः समं वातायनमधिवसानः स यवनाधिपः प्रमत्तं मधुनोत्तेजितं गजेन्द्रं मुक्त्वा तेन समं योध्दुं शिवराजसैनिकानामन्यतममाज्ञापयामास. तदानीमेव एसाजीकंकः केवलं खड्गहस्तः पुरतोभूय तस्थौ. सोऽपि मत्तेभस्तदाक्रमणाय

काल इव प्राधावत. एसाजींकंकस्तं प्रहरणेच्छया तिर्यक् भविष्यन्तं शुण्डादण्डे खड्गेन तथा प्राहरद्यथा स गजेन्द्रः कृतचीत्कारशब्दो लगुडताडितः श्वेव पलायत. स च शुंडादण्डः कदलीस्तंभ इवामूलाल्लूनो यमहस्त इव तस्मिन् स्थले पपात. तदेतदपूर्वं तदीयं शौर्यं निरीक्ष्य विस्मतः स यवनाधिपस्तमभिनंद्य सुवर्णकटकादीनि पारितोषिकाणि वितीर्य 'अस्मै कश्चन महान् ग्रामो देय' इति स्वामात्यावाज्ञापयत्. स तु एसाजींकंको महता विनयेन तं यवनाधिपं 'राजन्? अहमस्मि पुण्यश्लोकस्य शिवराजस्य क्षुद्रः सेवकः. अस्मत्स्वामी तु न कदाप्यस्मानुपेक्षते. अतो न किमपि न्यूनं नः. यस्य कस्यचिद्युष्माकं प्रजाभूतस्य ब्राह्मणस्यापेक्षा स्यात्तस्मै स देय इति' विज्ञापयामास. स कुतुबशहानामा यवनाधिपस्तस्य शौर्यं तथा स्वामिनिष्ठां च समवलोक्य विस्मयापहृतचेतास्तूष्णीं तस्थौ. अथ कतिपयदिनानि भागानगरे उषित्वा तदधिपसत्कारमनुभूय सन्तुष्टः शिवराजोऽग्रे जिगमिषुरनुमितिं पप्रच्छ. सोऽपि तादृशस्य बलाढ्यस्य सौहार्दं संपाद्य प्रमुदितः संजातविश्वासो महताऽऽनन्देन स्वीयं शतघ्नीविभागं साहाय्यार्थं दत्वा पुनश्च नानावस्तून्युपायनीकृत्य विससर्ज.

( ३ )

एवं भागानगराधीशात् प्रभूतं धनं तथा प्रबलं शतघ्नीविभागं संपाद्य शिवराजो महतोत्साहेन कर्णाटकविभागं ययौ. स क्रमेण गच्छन् तुंगानदीमवतीर्य मार्गवर्तिभ्यो राजभ्यो द्रव्यमुपायनत्वेन

गृण्हन् क्रमेण श्रीशैलमल्लिकार्जुनक्षेत्रमागमत्. तत्र चालौकिकसौन्दर्यशालिनीं वनश्रियं तथा कृष्णानदीं वीक्ष्य संजातवैराग्यः श्रीशैलमल्लिकार्जुनं नत्वा तत्रैव वस्तुमियेष. परन्तु रघुनाथपन्तो राजकार्यप्रवीणस्तं रहस्यवदत्—राजन्? इदं संन्यासियोग्यं वैराग्यं राजर्षेस्तव न योग्यं. त्वया हि गोब्राम्हणरक्षार्थं भुवमवतीर्णेन तदेव सम्यगनुष्ठेयं. स्वामिन्? प्रबलेभ्यो दैत्येभ्य इव यवनेभ्योऽस्मान् रक्षितुं त्वदन्यः कोऽपि नास्ति. तत्कर्तव्यपराङ्मुखो मा भूः. भगवान् त्वां चिरायुषं विधाय यवनान् भारतवर्षान्निःसारयत्विति. इदं च महामात्यस्य प्रतिभामयं भाषणमाकर्ण्य प्रकृतिमापन्नः शिवराजो जनक इव तत्र पुण्यानि कर्माणि कृत्वाऽग्रेऽव्रजत्. ततश्च जवेनाग्रे गच्छन् शिवराजः चन्दीनामकं महादुर्गं रुरोध. चकार चात्मवशं. तथैव सर्वं तं प्रदेशं स्वकीयं कृत्वा तत्र स्वप्रतिनिधिं न्यधात्. अथ सकलभारतप्रसिद्धस्वादुसलिलायाः परमरमणीयवनश्रीभूषितायाः कावेर्यास्तीरे कृप्तनिवासस्तत एव व्यंकोजिराजाय स्वागमनं निवेदयामास. दूतमुखेन तमवदच्च— दिवंगतानां तातपादानां बहूनि वर्षाणि वृत्तानि. तैः संपादितः कृत्स्नो भूविभागो भवद्भिरेव भुज्यते. कदापि मह्यं वार्ताऽपि न प्रेष्यते. तमहं यवनाक्रान्तभूविभागमोचनार्थमत्रागत आयुष्मता द्रष्टव्यः. पश्चाच्च दायव्यवस्थां करिष्याम इति.

व्यंकोजिराजश्च परतंत्रप्रज्ञः शिवराजस्य नियोगमाकर्ण्य मित्रेभ्यः कर्तव्यं पप्रच्छ. तानि च प्रकृतिकुटिलानि बभाषिरे. शिवराजश्च

परं लोभी. स च प्रत्यहं नानाभूविभागानाक्रम्याऽपि अजातसंतोषो दायभागयाचनामिषेण युष्माकं राज्यमपहर्तुमिच्छति. वस्तुतस्तु शहाजीराजैः परमपराक्रमैः संतोषिताद्विजापुराधीशाल्लब्धोऽयं भूविभागः. अयं च शिवराजः साम्प्रतं विजापुराधिपेन समं बद्धवैरः. तत् स्वाधिपशत्रवे दायभागयाचनाधिकार एव नास्ति. यदि च बलादिमं विभागं शिवराज आक्रमिष्यति तदा वयमपि कर्णाटकविभागस्थानां राज्ञां साहाय्येन प्रतीकारं करिष्याम इति. निशम्य स्वामित्रमण्डलस्येमं मंत्रं व्यंकोजिराजोऽपि तथैवावर्तत.

अथ शिवराजो गृहकलहमनिष्टं मन्यमानः क्रमेण विजापुराधीशस्य नानादुर्गवरसमलंकृतं महान्तं भूविभागं स्वायत्तमकरोत्.

( ४ )

एवं शिवराजप्रतापं श्रुत्वा भीतेषु कर्णाटकविभागस्थेषु राजसु तत्साहाय्यलाभे निराशो व्यंकोजिराजः शिवराजदर्शनार्थमागच्छत्. सोऽपि तं सत्कृत्यादरेण प्रेम्णा चावर्तत. एकदा रहसि स्थितः शिवराजो व्यंकोजिराजमित्थमुपदिदेश– भ्रातः ? भवता दुष्टजनमंत्रं निशम्य चतुरो रघुनाथपन्तो दूरीकृतः. यत् खलु पितृचरणैः संपादितं तदेव सम्यक् न परिपाल्यते. दुर्जनसंगतौ सुखं मन्यते. यवनसेवायां परमाभिमानो ध्रियते. तदिदं नः क्षत्रियाणामनुचितं. सकलं भारतवर्षं

खलु यवनैराक्रान्तं. तन्मोचयितुं प्रयतमानस्य मे स्वल्पमपि साहाय्यमकृत्वा प्रत्युत विरोधः क्रियते. तदेतदत्यन्तमसमीचीनं. पौरुषमकृत्वा जीवनमबलानां शोभते न तु पुनः क्षत्रियाणां. यदि त्वमिमं कृत्स्नं दक्षिणापथं स्वायत्तीकर्तुमिच्छसि तदा सर्वथा त्वामहं साहाय्ययिष्यामिति. व्यंकोजिराजश्च श्रुत्वैममुपदेशं निभृतं तस्थौ. ततः कतिपयदिवसैः शिवराजो व्यंकोजिराजमुदासीनं वीक्ष्य स्वनिवासं गन्तुमनुमुमुदे. सोऽपि किंचिदनुक्त्वा स्वनिवासमगात्. अत्रान्तरे महाराष्ट्रदेशादागतो दूतो दिल्लीश्वरो दक्षिणापथं जेतुं महता सैन्येन समं स्वयमेवागच्छतीति निवेदयामास. तच्च श्रुत्वा शीघ्रमेव स्वराजधानीं गन्तुकामः शिवराजः कर्णाटकविभागे नूतनं संपादितं भूविभागं परिपालयितुं रघुनाथपन्तं तथा हंबीररावसेनापतिं नियुज्य स्वयं स्वदेशमागन्तुं प्रातिष्ठत. शिवराजं कृतप्रस्थानमाकर्ण्य व्यंकोजिराजस्य मित्राणि तं शिवराजसेनापतिमाक्रम्य पराजेतुं प्रोत्साहयामासुः. सोऽपि तत् समीचीनं मन्यमानः कतिपययवनसैनिकैः समं तां सेनामाचक्राम. रघुनाथपन्तस्तु स्वामिपुत्रोऽयमिति' मत्वा युद्धं परिहरन् यवनसैनिकानजयत्. व्यंकोजिराजश्च पलायनेनात्मानं जुगोप. रघुनाथपंतप्रेषितेन लेखेनेदं सर्वं वृत्तं विज्ञाय खिन्नः शिवराजः पुनरपि व्यंकोजिराजं पत्रद्वारा परं निरभर्त्सयत्. रघुनाथपन्तं च सावधानेन वर्तितुमादिदेश. व्यंकोजिराजश्च ततआरभ्य गृहीतवैराग्यो न पूर्ववद्राज्यकार्येषु मनोऽदात्. तद्वैराग्यं वीक्ष्य खिन्नया

पत्न्या दीपादेव्या पृष्टः–शिवराजश्च दिल्लीश्वरप्रभृतिभिर्बलाढ्यैर्यवनाधिपैः समं युध्यते न कदापि पराजयं प्राप्नोति. वयं तु केवलेन स्वल्पेनैव तदीयेन बलेन पराजिता मन्दभाग्याः किं कुर्मः. साम्प्रतं स स्वार्धं याचत इति विललाप. तदिदं तदीयं वैराग्यकारणं श्रुत्वा साध्वी दीपादेवी 'महाभागास्ते दिल्लीपतिप्रभृतीन् बलाढ्यान् यवनाधीशानतीत्य वर्तन्ते. तत्रापि तेषामुद्योग एव प्रधानं कारणं. युष्माभिश्च वृथैव तैः समं विरोधः कृतः. असंख्यान् युष्मादृशान् सेवकान् न्यायेन ते परिपालयन्ति. तेषां महाभागानां नायमपराधो यत् पैतृकविभागयाचनं. अहं तु मन्ये ते कृत्स्नं न गृण्हन्तीति तेषामुपकार एव. यतस्ते ज्येष्ठाः. राज्यशासने सर्वथा ज्येष्ठस्यैवाधिकारो न कनिष्ठस्येति शास्त्रकाराः समामनन्ति. यूयं च कनिष्ठाः. आस्तामियं शास्त्रकथा. सर्वथा तानाश्रित्य युष्माभिः पराक्रमो विधेयः. ते यथा स्वतातपादानां यशः प्रसारयन्ति तथैव युष्माभिरपि करणीयं. अनेन सुलभेन वैराग्येण को वा लाभ ! इति. एवं साध्व्या तया दीपादेव्या स्पष्टं बोधितः स व्यंकोजिराजो विधूय वैराग्यं पुनरपि रघुनाथपन्तानुमत्याऽवर्तत.





# १७ सज्जनसमागमः

१ धर्मे निसर्गतः प्रीतिः

२ सज्जनमंडली

३ रामदासस्वामिनामुपदेशः

वाचकाः? अधुना श्रीशिवच्छत्रपतेरेतावत उत्कर्षस्य कारणं किमिति अनेन विषयनिरूपणेन निरूपयितुमिच्छामि. बान्धवाः? अस्योत्कर्षस्य कारणं शिवराजे वर्तमाना नैसर्गिकी धर्मप्रीतिरेव. धर्मशब्देनेह कस्याऽपि समाजस्य धर्मो नाभिप्रेतः किंतु सर्वेषां तत्तत्समाजधर्माणां प्राणभूतः परोपकारफलकः सदाचारधर्म एव गृह्यते. शिवराजश्च कियान् सदाचार आसीदित्यत्राहमेकमुदाहरणं कथयामि.

एकदा शिवराजः कल्याणविभागं जेतुं स्वामात्यमाबाजिसोनदेवनामानं प्राहिणोत्. सोऽपि तं प्रदेशं स्वायत्तीकृत्य तदधिपस्यान्यत्र स्थितस्य परमलावण्यखनिं भूमिमवतीर्णां तिलोत्तमामिव स्नुषां बन्दीचकार. तां वीक्ष्य विस्मितः साधारणमतिः 'आबाजीसोनदेवः'- इयं खलु स्वामिचरणेभ्यः समर्पणीयेति मन्यमानस्तामादाय राजधा-

नीमाययौ. तत्र च स्वामिनं प्रणिपत्य विजयवृत्तं निवेद्य 'स्वामिन्? अस्मिन् युद्धे मयैकं रत्नं लब्धं. तदुपभोगे स्वामिचरणा एव योग्याः. तत्तद्रत्नं स्वीकृत्य मां कृतार्थयन्तु' इति विज्ञापयामास. शिवराजोऽपि प्रीतो मध्यान्हे तदानेयं स्वीकरिष्यामीत्यवदत्. ततो मध्यान्हे सर्वप्रधानामात्यसमलंकृतायां सभायां सिंहासनमधिवसानः शिवराजः सर्वेभ्यः पारितोषिकाणि वितीर्य तमाबाजिसोनदेवं तस्य रत्न-स्यानयनाय समादिशत्. सोऽपि कामपि अवगुण्ठनवतीं लज्जा-नम्रमुखीं सुंदरीमानीय व्यज्ञापयत्—स्वामिन? इयं हि नारी-रत्नं! सर्वरत्नसंग्रहार्हश्च स्वामी. तदिमां स्वीकृत्य सफलयतु मदीयं परिश्रममिति. अवसिन एव तज्ज्ञापणे शिवराजः प्रहसन्निव दृढनिश्चयः सलीलं जगाद. अमात्य? शिवराज ईदृशरत्नसंग्रहेऽत्य-न्तमनुत्सुक इत्यद्यापि न जानाति भवान्! इदं हि महापापं यत्पर-दारापहारो नाम. यो हि साम्राज्यं कांक्षति तेन परदाराभिलापः प्रथमं हेयः. एतावान् बलाढ्यो रावणः परदारानभिलषन्नेव सर्वथा नामशेषोऽभूत्. सत्यमियं पूर्वसुकृतसंचयेन सुन्दरी तथापि यदि एतादृशी मम माता सौन्दर्यशालिन्यभविष्यत्तदाऽहमपि एतादृश एव सुन्दरोऽभविष्यम. जडस्य देहस्य सौन्दर्यं मूढानां चेतोहरं न विदुषां. तस्मादिमां साध्वीं वस्त्रालंकारादिभिः समादृत्य तत्पतेरन्ति-कं प्रेषयत. एषा चेतोगत्वा सर्वत्र ख्यापयतु शिवराजस्तथा तदीयाः सेवकाश्च मातृवत् परदारेषु वर्तन्त इति. बोधयतु च परदारसंसर्ग-

रतेभ्यो यवनाधिपेभ्यः सदाचारामिति. सर्वे सभ्यास्तथा सोऽमात्य इदं शिवराजस्य भाषणं निशम्य स्तब्धचित्तवृत्तयस्तं जनकमिव धार्मिकं प्रणम्य तदाज्ञामन्ववर्तन्त.

वाचकाः? किमिदं न लोकोत्तरं! गतास्ते परदारलोलुपा दिल्लीश्वरप्रभृतयो यवनराजास्तथा पुण्यश्लोको जनक इव धर्मरतः शिवराजश्च. तथापि यावच्चन्द्रदिवाकरस्थायि चन्द्रिकाधवलं तदीयं यशोमण्डलं सज्जनानानंदयत्येव.

अनया नैसर्गिक्या धर्मप्रीत्या स आबाल्यादेव दीनदयालुरासीदिति सर्वत्र महाराष्ट्रेतिहासे प्रसिद्धमेव. प्रायो धार्मिका जना आत्मौपम्येन सर्वत्र वर्तमाना दयालव एव भवन्ति.

( २ )

तामिमां नैसर्गिकीं धर्मप्रीतिं तदीया माता सम्यगवर्धयदिति पूर्वं निरूपितं. यथा मात्रा सा वर्धिता तथैव तदानींतन्या सज्जनमण्डल्याऽपि. क्रूरैर्दुराचाररतैर्यवनैर्भारतवर्षे समाक्रान्ते सर्वे जना ऐहिकं तथा पारलौकिकं फलमलभमाना अत्यन्तमक्लिश्नन्. तत्रैहिकफलस्य स्वास्थ्यलक्षणस्य रक्षणाय यथा शिवराजः प्रादुर्बभूव, तथा पारलौकिकफलस्य मोक्षलक्षणस्य रक्षणार्थं स्थाने स्थाने सर्वत्र भारतवर्षे सज्जनमण्डली प्रकटीबभूव. महारा तु सहस्रशः प्रादु-

भूता इमे सन्त उपदेशद्वारा जनान् कर्तव्यपरायणांश्चक्रुः. केवलं स्वरूपप्रदर्शनार्थं केषांचिन्नामानि उदाहरामि. श्रीपतिः, मुकुंदराजः, नामदेवः, गोराकुंभकारः, एकनाथः, निवृत्तिनाथः, ज्ञानदेवः, तुकारामः. न केवलं ब्राह्मणा एव ते किंतु अन्त्यजाअपि लोकोत्तरभक्त्या जनान् विस्मापयामासुः. एते च स्वयं विरचितैर्ग्रंथरत्नैर्महाराष्ट्रभाषामभूषयन्. तदानींतनेषु सर्वेषु साधुषु श्रीतुकारामाः स्वीयालौकिक्या भक्त्या तथाऽनुपमेन वैराग्येण लोकोत्तरा आसन्. ते च सर्वदैव हरिभजन-तत्पराः सर्वेभ्यो भक्तेभ्यो हरिभक्तिमुपादिशन्. शिवराजश्च तेषां प्रेममयानि हरिकीर्तनानि निशम्य धर्मप्रीतिं परमपोषयत्. स च तानुपदेशदानार्थं प्रार्थयत परन्तु प्रकृत्यैव निस्पृहा राजसांनिध्यत-श्चित्तविक्षेपमाशंकमाना न तत्प्रार्थनां स्वीचक्रुः.

( ३ )

अथ तुकारामसाधुवरानलब्ध्वा निराशः पुनरपि तत्सदृशान् साधुवरानन्वैषयत्. अचिरादेव दूतमुखेन–अस्मद्राज्य एव चाफळदरी-विभागे श्रीरामदासस्वामिनो नाम परमवैराग्यसंपन्नाः साधुवरा निवसन्तीति शुश्राव. विशेषेण जिज्ञासमानः 'जाम्बग्रामे निवसतां सूर्याजिपन्तानामिमे कनिष्ठाः पुत्राः. इमे च टांकळीवनेऽत्युग्रं तप-स्तप्त्वा लब्धसिद्धयः क्रमेण समग्रं भारतवर्षमटित्वा सनातनधर्मस्य दीनां दशामवेक्ष्य दुःखाकुलास्तदुध्दाराय प्रयतन्ते' इति ज्ञातवान्.

शिवराजश्चेदं वृत्तं लब्ध्वा सन्तुष्टस्तान् द्रष्टुमैच्छत्, परन्तु ते रात्रिंदिवं वने वा ग्रामे वा नदीतीरे वा यत्रकुत्रापि पर्यटन्तश्चिरात्तन्मनोरथं नापूरयन्. रामदासस्वामिनां चायं विशेषो यत्तेऽन्यसाधुवत् संसार-चिन्तां विहाय केवलं भगवद्भक्तावेवात्मानं नाग्मयन्त किंतु यवन-संत्रस्तान् जनान्निरीक्ष्य परं खिन्नास्तान्मोचयितुमैच्छन्. अथ शिव-राजः श्रीरामदासस्वामिनां दर्शनार्थं रात्रिंदिवं वनाद्वनान्तरं पर्यटन् तानलब्ध्वा खिन्न एकस्मिन् गुरुवासरे महाबलेश्वरतीर्थं गत्वा स्नात्वा ब्राम्हणान् भोजयित्वा श्रीसमर्थचरणदर्शनं विनाऽन्नाग्रहणाय कृतशपथः सुष्वाप. द्वितीये दिने श्रीसमर्थानां पत्रं गृहीत्वा तदीय-एव शिष्यः शिवराजं प्रत्यागच्छत्. शिवराजोऽपि प्रमुदितस्तत्पठित्वा शीघ्रमेव चाफळमठं गत्वा तत्र रघुपतिं प्रणम्य श्रीसमर्थानां पुरतो मुकुलितहस्तस्तस्थौ. श्रीसमर्थाश्च तं शिवराजं मूर्तं महाराष्ट्रपराक्रम-मिव समीक्ष्य सन्तुष्टाः परमप्रीत्या तं सर्वं वृत्तमपृच्छन्. तन्मु-खात् सर्वं श्रुत्वा प्रमुदितमानसा भूयः पराक्रमान् विधातुमुत्तेजयामासुः. शिवराजश्चानुग्रहणार्थं प्रार्थयत. श्रीसमर्थाश्च तं योग्यं मन्वाना महा-मंत्रोपदेशेनानुगृह्य कर्तव्यमित्थमुपादिशन् —राजन् ? मानवस्य प्रथमं कर्तव्यं परमात्मभक्तिः. सा च न परमेश्वरसंतोषाय विधेया किंतु तया स्वकल्याणमेव भवति. बलोन्मत्तो मानवः पशुवन्निरर्गलं संसारे वर्तमानः परान् दुःखाकरोति. बालकोऽपि शिक्षकभीत्या स्वकर्तव्य-मनुतिष्ठन् सुखी भवति. यथा बालकस्य शिक्षकभीतिरावश्यिकी तथैव

मानवस्य परमेश्वरभीतिः. सर्वज्ञः परमात्मा मदीयानि पापकृत्यानि पश्यन् क्रूरेण दण्डेन दण्डयेदिति मन्वानो मानवः कदापि उन्मत्तो न भवति स्वकर्तव्यदक्षश्च जायते. राजन् ? इह खलु संसारे ते जना विरला ये ईश्वराद्बिभ्यति. प्रायः 'इन्द्रियारामा इन्द्रियसुखलाभेनैव कृतकृत्यतां भावयन्तो जनाः' इहोपलभ्यन्ते. तस्मात्तेषां बलोन्मत्तानां परपीडनैकध्येयानां नीचानां शासनार्थं राजशक्तिरपेक्ष्यते. स एव राजा यः प्रजानां परिपालनेन स्वजीवनं यापयति. अन्ये च यथेच्छं वर्तमानाश्चौरा इव प्रजाभिर्वितीर्णं द्रव्यमुपभुंजाना राजशब्दं दूषयन्ति. यथा च पारलौकिके परमात्मभक्तिरूपे कर्मणि सावधानता तथैव लौकिकेऽपि. नीचाः स्वार्थलोलुपा जना राजानं स्तुवन्तः कर्तव्यविमुखं विदधति. तत् सावधानेन राज्ञा ते निराकर्तव्याः सज्जनाश्च संग्रहणीयाः. शिवराज ? किं बहुना 'मुख्यं हरिकथाख्यानं । द्वितीयं राजकारणं ।। तृतीयं सावधानेन । सर्वत्र समवर्तनं' इति नितरां ध्यायन् कर्तव्यं कुरु. भगवान् सीतापतिस्त्वां चिरंजीविनं विधाय सनातनधर्मं रक्षतु इति.

शिवराजश्चेममभृतोपमं सदुपदेशमाकर्ण्य सन्तुष्टः सदैव सावधानेन वर्तमानः प्रभूतानि परोपकारकार्याण्यकरोत्.





# १८ उपसंहारः

१ पश्चाद्राज्यव्यवस्थाविधानं.

२ स्वर्गवासः

३ गुणदोषविवेचनम्.

( १ )

एवं सततं विजयमानः श्रीशिवराजः परोपकारकार्याणि प्रतिदिनं कुर्वाणः परमुत्कर्षं प्राप. एकदा स स्वराजधानीमधिवसानो गूढचारमुखेन दिल्लीश्वरः स्वशासनार्थं दक्षिणापथनियुक्ताय प्रान्ताध्यक्षाय प्रभूतं धनं प्रेषयति ' इति शुश्राव. तदानीमेव स्वकीयं प्रजविसादिमण्डलमादाय निर्गतोऽकस्मात् मार्गे एव तान् कोशवाहकानाक्रम्य सर्वान् कोशानात्मसात्कृत्वा महत्या त्वरया राजधानीमायात्. अनेन दुःसहेन परिश्रमेणोरसि संजातवेदनो ज्वरितोऽभूत्. तं च ज्वरमनवतरन्तं वीक्ष्य भीताः सर्वे सेवकाः कुशलान् वैद्यानाहूय चिकित्सामारभन्त. शिवराजश्च स्वसेनापतिं तथा स्वस्य प्रधानामात्यं दिल्लीश्वरराज्ये पराक्रामन्तं मनसिकृत्वा स्वावस्थां गोपयन् शीघ्रमेव तौ स्वदेशमागन्तुमाज्ञापयामास.

अथ तौ विजयीभूय समागतौ समीक्ष्य सन्तुष्टः शिवराजः स्वस्य चरमं समयं समुपस्थितं जानन् स्वराज्यव्यवस्थां चिकीर्षुः सर्वानमात्यांस्तथा सेनानायकांश्चाहूय जगाद–सुहृदः ? अयं हि ज्वरो मे चरमो दृश्यते. अतऊर्ध्वमहं न भविष्यामीति निश्चितकल्पं. नात्र शोकस्यावसरः. यो हि जातस्तेनावश्यं परलोको द्रष्टव्य एव. यदिदं युष्माकं साहाय्येन महत् स्वराज्यं संपादितं तस्य साम्प्रतं चिन्ता करणीया. यच्च मम पैतृकं चत्वारिंशत्सहस्रमुद्रायं राज्यमासीत्तद्वर्धयित्वा कोटिमुद्रायं कृतमित्यत्र प्रधानं जगदीशकृपैव कारणं. अस्य कृत्स्नस्य राज्यस्य पालकः समीचीनः पुत्रः कोऽपि नास्तीति दूयते मे मनः. ज्येष्ठः संभाजिः क्रूरः परस्त्रीगामी शीघ्रकोपी राजपदानर्हः. कनिष्ठो राजारामश्च समीचीनगुणोऽपि अद्यापि वयसा बालः. दिल्लीश्वरस्तु मदीयमन्तकालं कालइव प्रतीक्षमाणः पश्चादत्रागत्य कृत्स्नं राज्यमाक्रम्य पुनरपि न आर्याणां कन्यका बलाद्दासीकरिष्यति. साम्प्रतं युष्माकं प्रतापतेजसाऽभिभूता विजापुराधीशप्रभृतयः पुनरपि तं साहाय्ययिष्यन्ति. तदस्मिन् भाविन्यनर्थे युष्माभिरैकमत्येन वर्तनीयं. संभाजिं पूर्ववत् प्रतिबंधे निधाय राजारामं राज्याधिपं विधाय सर्वैरपि स्वकर्माणि कर्तव्यानि. न परस्परं कलहः करणीयः. अन्तःकलहो न कदापि श्रेयकरः. प्रत्युत सर्वनाशकरः. परस्परं कलहायमानान्नो वीक्ष्य धूर्ता यवना अत्रागत्य स्वपादान् प्रासारयन्. तद्यद्यवशिष्टं मदीयं प्रेम युष्मासु, किंवा युष्मत्पूर्वजानामार्याणां तेजो

वा, स्वधर्मश्रद्धा वा, स्वभगिनीपातिव्रत्यभंगभीर्वा, अनाथधेनुप्राणरक्षणेच्छा वा, विप्रपालनतत्परता वा, तदा युष्माभिः परस्परं कलहो न करणीयः. संजातस्तु महता प्रयत्नेन परिहरणीय इति वदामि. एषा च मेऽन्तिमा प्रार्थना यथा मम प्राणेभ्योऽपि प्रिया मातृभूमिः पुनरपि यवनानां दासी न भविष्यति तथा सर्वथा भवद्भिर्वर्तनीयामिति.

ते च जनकस्येव धर्मशीलस्य स्वस्वामिनः शिवराजस्येमामाज्ञां परमात्माज्ञामिव सततं निपतद्भिरश्रुजलैरगृण्हन्.

( २ )

एवं सर्वानादिश्य शोकाकुलांस्तान् सान्त्ववचनैः कर्तव्यमुपदिशन् कृतसर्वप्रायश्चित्तविधिर्भागीरथीजलेन विरचितस्नानो भस्मचर्येन गात्रं विलिप्य रुद्राक्षमाला बिभ्रदात्मानात्मविवेकेन सकलं समयमनयत्. विद्वद्भ्यो विप्रेभ्यः शतगो गा ददौ. एवमन्यान्यपि पुण्यकर्माणि समाचरत्. अथ संप्राप्ते नेत्रखशास्त्रब्रह्मपरिमितस्य शालिवाहनशकस्य रौद्रनामसंवत्सरस्योत्तरायणे चैत्रमासपूर्णिमायां मध्यान्हकाले शिवराजः परीक्षिदिव समस्तभारतभूमितिलको महाराष्ट्रभूकल्पद्रुमः स्वर्गमारुरोह. तस्मिन् समये महान्त उत्पातास्तथा नक्षत्रपाता अजायन्त. सूर्योऽपि स्वकुलसंभूतस्य पराक्रमशालिनस्तस्य शिवराजस्य स्वर्गगमनेन दुःखित इव न सम्यगभात्. सर्वे सेवकास्तथा प्रजाजनाश्च शोकसागरे न्यमज्जन्.

अथ कथमपि स्वशोकं विधूय सर्वेऽपि अमात्याः शिवराजस्य चरमामाज्ञां स्मरन्तो दुर्गद्वाराणि पिधाय तां वार्तां बहिरप्रकाशयितुं सर्वानाज्ञापयामासुः. ततश्च सर्वैश्वर्येण समं शिवराजदेहमलंकृत्य विधिवत् पंचभूतसाच्चक्रुः. तदानीं पुतळादेवीनाम शिवराजस्य तृतीया पत्नी सहगमनं चक्रे. वाचकाः ? अस्मिन् जननमरणशालिनि संसारे के न जाता मृता वा ? परन्तु शिवराजसदृशः पुण्यश्लोको भूपालो न भावी न भूतः. शिवराजादपि लोकोत्तरशौर्यशालिनो वीरा अत्राजायन्त. शिवराजस्य चापूर्वत्वं न शौर्याधीनं नापि स्वराज्यस्थापनाधीनं किंतु लोकोत्तरनीतिमत्ताधीनं. शिवराजश्च महता प्रयासेनेदृशं महाराज्यं लब्ध्वाऽपि समुपस्थितेऽन्तसमये राज्यवियोगदुःखलेशरहितः साधुरिव मोहेन देहं विससर्ज. ज्येष्ठपुत्रं दुर्वृत्तमवलोक्य तमप्यदण्डयत्. परदारासु मातृवदवर्तत. सज्जनाः ? ये खलु प्रकृत्यैव सात्विकाः साधवस्तेषां न तथा लोकोत्तरत्वं यथा राज्ञां ! राजानश्च रजोगुणप्रधाना नानाविधमोहकार्यैश्वर्यसंपन्नाः प्रायो दुर्वृत्ता एव समुपलभ्यन्ते. एवंसत्यपि सकलैश्वर्यशाली मोहलवहीनः शिवराजः स्वकर्तव्यं तथा नीतिं च न व्यस्मरत्. इदमेव तस्यालौकिकत्वं. प्रसिद्धो महंमदगिझनवीनामा यवनराजः सप्तदशकृत्व इमां भारतमहीं निर्लुण्ठ्यागणितान् जनान् हत्वा संपादयामास संपद्राशिं, परन्तु तस्य च वियोगसमये सम्प्राप्ते स बालक इव रुरोद. तुकारामसाधुवरा अकिंचनाः सर्वदैव सुखेन वर्तमाना आनन्देन दिवं जग्मुः, किंतु सकलैश्वर्यसंपन्नोऽपि

शिवराजः साधुवल्लीलया प्राणान् व्यसृजदिति महदाश्चर्यं. अतएव शिवराजो जनक इव राजर्षिरभूदिति मान्या वदन्ति.

( ३ )

बान्धवाः? यद्यपि समाप्तकल्पमेव शिवराजचरितं तथापि गुणदोषविवेचनं विना तत्पूर्तिर्न संभाव्यत इति संक्षेपतस्तद्वर्णयित्वोपसंहारामि. यद्यपि गुणविवेचनं प्रथमं कर्तुमुचितं तथापि तद्दोषविवेचनेन समुज्वलितं भवतीति प्रथमतो दोषान्विवेचयामि. राज्जनाः? पूर्वोक्तरीत्या सकलगुणास्पदे नीतिमति तस्मिन् प्रौढा दोषा नासन्नेव परन्तु तस्मिन् यवनेतिहासकारैर्ये समुत्प्रेक्षिता दोषास्तानेव विचारयामि.

यवनेतिहासकारैः शिवराजे प्राधान्येन कृतघ्नता, कापट्यं, क्रौर्यं लुब्धत्वं लुण्ठकत्वादयो दोषा उत्प्रेक्षिताः. क्रमेण विजापुरराजद्रोहः,अफझुलखानवधो, बाजीघोरपडेसामन्तस्य नाशः, सुरतनागरिकच्छल, इत्युदाहरणान्यपि दत्तानि. एतेषामसत्यत्वं चतुरो वाचकवर्गो लीलयैव जानीयात्. ये तु मूढमतयस्तेषां कृते वयं किंचिल्लिखामः. शिवराजः कृतघ्नस्तर्हि अवरंगजेबः कः? शिवराजश्च मातृभूमिं परकीयदास्यादमोचयत. अवरंगजेबस्तु बन्धूंस्तथा पितरमेव जघान. वस्तुतस्तु

स्वकपटस्य फलमेव तु लेभे. घोरपडेसामन्तस्य वधस्तु शिवराजस्य निरतिशयां पितृभक्तिं बोधयति. ये च परकीयकृपासंपादनार्थं स्वीयेभ्य एव द्रुह्यन्ति तेऽवश्यमेव दण्डनीया भवन्ति. लुब्धत्वं लुण्ठकत्वं चावशिष्टम्. परन्तु यदि शिवराजो यवनराजप्रदेशं निर्लुण्ठ्येतरयवनराजवद्विलासपरोऽभविष्यत्तदा स लुब्धो लुण्ठकश्चाकथयिष्यत्. नैव कदापि शिवराजः स्वसुखार्थं संपादितात् द्रव्यात् कपर्दिकामपि समुपयुयोज. प्रत्युत शिवराजः संपादितस्य द्रव्यस्य सदुपयोगार्थं कियान् सावधान आसीदित्यत्राहमेकां कथां कथयामि.

एकदा युवराजः संभाजिराजो मृगयार्थं सुहृद्भिः प्रार्थितोऽश्वान् क्रेतुं द्रव्यमपेक्षत. शिवराजश्च परं निस्पृहस्तदीयामपेक्षां नापूरयत्. ततश्च स कुमित्रैश्चोदितः कोषागारस्य द्वारमीषदुद्घाट्य तत एव द्रव्यं जहार. इदं निरीक्षकमुखाद्विज्ञाय क्रुद्धः शिवराजस्तमाहूय कशाभिः परमताडयत्. अवदच्च–पुत्रक? इदं च द्रव्यं यथेच्छव्ययार्थं न मातृभूम्या मह्यं प्रदत्तं. मातृभूमिरनेन द्रव्येण दीनान् जनान् रक्षितुमिच्छति, बलोन्मत्तान् यवनानुन्मूलयितुं. तस्माद्यथा चौरस्य द्रव्यापहारे कशाभिस्ताडनं न्यायविहितं तथैव त्वामहं ताडयामीति.

वाचकाः? उपरिनिवेदितयाऽनया कथया शिवराजः कथं निस्पृह आसीदिति निवेदितमेव. एवंसत्यपि यदि तस्य लुब्धत्वं तदा केवलं संपल्लाभार्थमेव जनान् पीडयतां महंमदगिझनवीइत्यादीनां

कीदृशं तत्वमिति भवद्भिरेव वक्तव्यं. तस्माच्छिवराजदोषोद्घाटनं यवनेतिहासकाराणां पक्षपातमूलकमेवेति न तत्रादरः सतां.

बान्धवाः? निरस्ता दोषाभासाः. अधुना गुणा वर्ण्यन्ते. ते चानुकरणार्थमभीष्टाः. तत्र मुख्यो गुणः शिवराजे दीनदयालुताऽऽसीत्. स च स्वकीयान् मदोन्मत्तैर्यवनैःपीडितान् यथा ऽरक्षत् तथैव परकीयानपि स्वकीयैः पीडितान्. स्वीयं कृत्स्नमप्यायुर्दीनरक्षार्थं यापयता शिवराजेन निःसंशयमयं गुणः प्रकटीकृतः.

द्वितीयश्च गुणः—परधर्माद्वेषित्वं. यथा यवनराजाः स्वप्रजाभूतानपि अयवनजनानद्विषन्. तदर्थं च तान् करेणादण्डयंस्तथा न शिवराजः स्वप्रजाभूतान् यवनान्. किंबहुना स यथाऽऽर्याणां मूर्तीरादरयत्तासां च रक्षणे प्रायतत, तथैव यवनानामुपासनामंदिराणि रक्षितुं.

तृतीयश्च—सर्वथा परांगनासंसर्गपरांमुखता. अयं चालौकिको गुणः साधारणेष्वपि जनेषु न दृश्यते तदाऽपारैश्वर्यशालिषु राजसु नेति किमु वक्तव्यं. वाचकाः? रामचन्द्रसदृशाः दुष्यन्तसमवृत्तयो नरवराः कलियुगेऽत्यन्तं विरलाः. तत एव शिवराजं तदीयाः शत्रवोऽपि स्तुवन्ति.

चतुर्थश्च—मातृभक्तिः. स स्वमातरं जिजादेवीं भगवतीं मन्यमानस्तदुपदेशमनुसृत्य वर्तनेनेयन्तं भाग्योत्कर्षं लेभे.

पंचमश्च गुणो–गुणग्राहकता. अतएव तदीयाः सेवका अहमह-मेकया दुष्कराण्यपि कार्याणि कर्तुं प्राभवन्. एकदा प्रसिद्धस्तानाजि-मालुसरेनामा बालसुहृद्वीरः स्वपुत्रस्य विवाहोत्सवे निमंत्रितुं शिवराजं समागतो जिजादेव्या सिंहगडदुर्गाक्रमणाय कथितस्तत एव निर्गत्य रात्रौ दुर्गमात्मवशं विधाय वीरलोकं ययौ. शिवराजश्च तद्दुःखदुः-खितस्तस्य बन्धुं सूर्याजिं तत्पदे नियोज्य स्वयं तस्य स्वामिभक्तस्य तानाजिरावस्य पुत्रस्य विवाहं कृत्वा सर्वानप्यानन्दयत्.

षष्ठश्च–निरभिमानित्वं. बहवो हि जनाः प्रथमतः साधारणा महता परिश्रमेणैश्वर्यं संपाद्य तन्मोहमूढचेतसः कर्तव्यपराङ्मुखा अपारगर्वभारभुग्ना भवन्ति. शिवराजश्च जन्मतः साधारण एवासीत्. तथापि परमैश्वर्यं प्राप्य स लेशतोऽपि गर्वं नोवाह. स सदैवात्मानं मातृभूमेः सेवकं मन्वानस्तदुद्धारकर्माण्येव चक्रे.

सप्तमश्च–कृतज्ञता. शिवराजः परं कृतज्ञ आसीत्. स च केनाऽपि कृतं स्वल्पमपि उपकारं न व्यस्मरत्. ततएव सर्वे सेवकास्तस्मा अस्पृहयन्. वाचकाः ! अस्मिन् विषयेऽहमेकां कथां कथयामि.

एकदा शिवराजः सुरतनामकं धनाढ्यं यवनराज्यान्तर्गतं नगरमाक्रमितुमिच्छुः प्रथमतः स्वयं तन्निरीक्षितुमियेष. ततश्च गृहीत-भिक्षुवेषः शिवराजः कृतकृत्यः क्रमेण स्वराजधानीं प्रत्यागच्छन् मार्गे

झंझावातपीडितो निवासार्थं कस्याऽपि कृषीवलस्य गृहं प्रविवेश. तत्र च तेन सादरं सेवितः परं संतुष्टः स्वराज्यं प्राप्य तं कृषीवलं समाहूय महता प्रेम्णा समनुगृह्य स्वराज्यवासिनं चक्रे. वाचकाः? किमिदमुदाहरणं शिवराजस्याकृत्रिमां कृतज्ञतां न प्रदर्शयति!

अष्टमश्च गुणः—आस्तिक्यं. बान्धवाः? यद्यपि मया शिवराजस्य गुणाः प्रदर्शितास्तथापि अयं गुणस्तस्मिन्नपूर्व एवासीत्. प्राप्तैश्वर्योऽपि शिवराज आत्मानमीश्वरसेवकमेवामंस्त. विश्वसिति स्म च परमात्मसाहाय्ये. परमबलाढ्येन अफझुलखाननाम्ना कपटिना विजापुराधीशसेनापतिना मीलितुमेकाकी प्रयातः शिवराजो मनसि भगवतीमेव स्वसाहाय्ययित्रीं निरचिनोत्. ततएव स महान्ति कार्याणि व्यधात्. सर्वनाशकारणं दुरभिमानं लेशतोऽपि नोवाह.

प्रियबांधवाः? यद्यपि श्रीमति सकललोकमाननीये मातृभूमिसेवादक्षे श्रीशिवराजेऽगणिताः सद्गुणा आसंस्तथापि केवलं मया जडमतिना दुर्जनयवनेतिहासकारमुखमुद्रणार्थं समुल्लिखिता उपरिनिरूपिता अष्टौ गुणाः. वस्तुतोऽविरतं स्वकिरणव्रातेनामृतं वर्षतो राकानिशाकरस्य नास्ति गुणवर्णने यथाऽवश्यकता तथा शिवराजस्याऽपि. ये हि तत्राऽपि दोषान् पश्यन्ति मन्ये तान् जात्यन्धानिव ब्रह्माऽपि संतोषयितुं न शक्नुयात्.

सज्जनाः ? महाभागाः ? कः खलु शिवराजस्य गुणनिधिं वर्णयितुं शक्नुयात्. येन हि स्वीयं सकलं जन्म नानाक्लेशान्विषह्य स्वमातृभूम्युद्धारार्थं यापितं स महात्मा गोब्राम्हणप्रतिपालकराजाधिराजमहाराजः केन वर्णयितुं शक्यः ! प्रियमहाभागाः ? अस्माकमुपरि ये खलु शिवराजेनोपकारराशयः कृतास्तेषां स्मरणार्थं खलु मया परमपवित्रं शौर्यादिसद्गुणादर्शं चरित्रमिदं लिखितं. वयं च सर्वे भारतवासिनोंऽशतोऽपि यदि शिवराजस्य राजर्षेः सद्गुणानादर्शीकृत्य वर्तिष्यामहे तदैव कृतज्ञा भविष्यामः. स च त्रैलोक्यपालकोऽस्मान् कृतज्ञान् करोतु.



भारतवीररत्नमालायाः प्रथमे रत्ने.

# श्रीमहाराणाप्रतापसिंहचरिते.

## मान्यानामभिप्रायाः.

### तत्रभवान् कविसम्राट् टागोरकुलेन्दू रवीन्द्रनाथः—

प्रायः संस्कृते गद्यकाव्यानि न सन्त्येव. यानि च सन्ति तानि समासप्रचुराणि दुर्बोधवाक्यव्याप्तानि बालानामनुपकारीणि. इदं नूतनं हसूरकरोपाव्हश्रीपादशास्त्रिणा लिखितं 'श्रीमहाराणाप्रतापसिंहचरित्रम्'तु पूर्वोक्तदोपवर्जितं विशेषतो मातृभूसेवनाय सन्नद्धानां विद्यार्थिनामुपयोगि. अतएव मया अस्य पाठनाय मदीये शान्तिनिकेतननाम्नि विद्यालये समाज्ञप्ताः शिक्षकाः. इच्छामि च पुनरपि एतादृशानि नूतनानि संस्कृतपुस्तकानि प्रादुर्भवन्तु इति.

### सुप्रसिद्धस्य केसरीपत्रस्य संपादकः—

अश्लीलपदविन्यासानामनीतिप्रवर्धकानां दशकुमारचरितादीनां चरितानां पाठनापेक्षया यदि एतादृशानि चरितानि तत्र तत्र नियुक्तानि भवेयुस्तदा महान् लाभः स्यात्.

### सितामहुनरेशः—

इदं चरितमवलोक्य महान् प्रमोदः. उपकृताः सर्वे राजस्थानशासिनः. संस्कृतभाषाया इयमलौकिकी सेवेति मन्ये.

मूल्यं—१॥ सार्धो रूप्यकः (प्रेषणव्ययःपृथक्) ये च प्रवेशमूल्यं १ रूप्यकमेकं दत्वा नियतग्राहका भविष्यन्ति ते पादोनेन मूल्येन सर्वाणि पुस्तकानि लभेरन्.

अस्या मालायास्तृतीयं रत्नं.

## श्रीपृथ्वीराजचव्हाणचरितम्.

भारतसाधुरत्नमालायाः प्रथमं रत्नम्

# श्रीमद्वल्लभाचार्यचरितम्

लेखकः

हसूरकरोपाह्वः श्रीपादशास्त्री

[ न्यायतीर्थः वेदान्ततीर्थः मीमांसातीर्थः, सांख्यागमश्च ]

अस्मिन् चरिते श्रीवल्लभाचार्याणां समग्रं चरितं, पुष्टिमार्गस्वरूपं, तदीयानि तत्वानि, तत्वज्ञानं, शंकराचार्यादीनां मतापेक्षयाऽस्यैव मतस्यादरणीयत्वे प्रमाणानि सम्यक् निरूपितानि. श्रीमद्वल्लभाचार्याणां चरितमन्यदेतादृशं नैव विद्यते. मूल्यम् रूप्यकद्वयं प्रेषणव्ययः पृथक्.

द्वितीयं रत्नम्-

# श्रीरामदासस्वामिचरितम्.

अचिरादेव प्रकटीभविष्यति

मॅनेजर बी. बी. गंधे.

३० इमलीबाजार, इंदोर. सिटी C. I.